বিদ্বদ্বরায় পরমশ্রদ্ধাভাজনায় ডাক্তার
শ্রীযুক্ত সুনীতি-কুমার চট্টোপাধ্যায় মহোদয়ায়
সাদরোপহারম্ সমর্পিতমিদম্ গ্রন্থঃ

[illegible]

# दर्शनसमुच्चयः ।

आयुर्व्वेदीय-गोविन्दसुन्दरीमहाविद्यालयाध्यक्ष-
महामहाध्यापक-
श्रीरामचन्द्रमल्लिकव्याकरण-काव्य-
सांख्यतीर्थेन विरचितः ।

श्रीचिन्तामणिषट्तीर्थेन
३७ संख्यक-कर्णओयालिस् इत्याख्य-
वर्त्मस्थभवनात् प्रकाशितः ।






मूल्यं राजतमुद्रामात्रम्




PRINTER: SURES C. DAS, M. A.
ABINAS PRESS
40, MIRZAPUR STREET, CALCUTTA.

## उत्सर्गपत्रम् ।

देव ! द्विजपद ! देवि ! राजेन्द्रनन्दिनि !
जनक ! जननि ! यत्नाद्वर्द्धितो यः स्वजातः
तनयतरुविरोहः स्नेहनीरं निषिच्य ।
चरणकमलयोर्वां स्वप्रसूनं स दत्ते
विसदृगपि दयातो गृह्यतामात्मगृह्यम् ॥

भक्तो सन्तानः श्रीरामचन्द्रः ।



# विज्ञापनम्।

हन्त! संस्कृतरचनायामाकाशकुसुमायते यशोलेशोऽपि; इदानीन्तनसमाजे संस्कृतग्रन्थनिर्म्माणेन धनलाभलोभस्तु मरुभूमौ जलान्वेषणमिव विभ्रान्तव्यापारः; प्रतीच्यगुणमुग्धजनसकाशे प्राच्यवस्तूपस्थापनं शीते व्यजनसञ्चालनमिव वैधेयविधानम्। तथापि तु महर्षिगणगुम्फितमपि दर्शनशास्त्रं दर्शनशक्तिहीनाः सर्वथा विगर्हयन्ति; आर्य्या अपि नितरामनार्य्याचारा दूरतः परिहरन्ति; केचन बुभुत्समाना अपि बीभत्समाना भ्रुकुटीकुटिलया दृष्ट्या कदाचिदेव पर्य्यवेक्षन्ते; आद्रियमाणा अपि विरलविरला लोका निरर्थकतां प्रतिपादयन्ति दर्शनशास्त्रस्य। तदेतावतो दोषान् निरसितुमिच्छता प्रबन्धेऽस्मिन्नकारि मया खल्वेतावान् गरीयान् निर्बन्धः। यदि पुनरनेन सुधियः कियन्तमप्युपकारं समीक्षन्ते, तदा सर्व्वथैव भविता मे सफलोऽयं प्रयत्नः।

उपसंहारे खल्विदमेव निवेद्यते यत्, आकरागतविद्याविद्योतमानहृदयो हृद्यचरित्रः श्रीहेमचन्द्रव्याकरणतीर्थः श्रीकालीनाथवेदान्तशास्त्री च महीयांसमायासमङ्गीकुर्व्वन् परिदर्शनमस्य संसाधयन् महान्तमुपकारमकार्षीत्। अतस्तयोरहं चिरमेव कृतज्ञः स्थित इति।

| | |
|---|---|
| १८५६ शकाब्दीय-<br>सौरचैत्रस्य चतुर्थदिवसीयम् | सर्व्वविधेयस्य<br>ग्रन्थकारस्य |

# दर्शनसमुच्चयः ।

## प्रथमः परिच्छेदः ।

वन्दे गोविन्दमानन्दं माययेवाश्रितं श्रिया ।
श्लिष्टं सौदामिनीदाम्ना सजलं जलदं यथा ॥

साङ्ख्य-योग-पाशुपतादिदर्शनसार्थक्यमिति हि भारतीयपण्डितमहामण्डलसभायाः स्वागतकारिण्याः समितेः पञ्चमप्रश्नावतारः । तत्र "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते" इति सार्व्वजनीनप्रसिद्धेरानर्थक्यं वेति शङ्काया अपि नास्त्यवकाशः । केवलं कुत्र कीदृक् सार्थक्यमित्येतदेवालोचनीयम् । किन्तु प्रश्नोऽयमादिपदोपादानान्नहि साङ्ख्यादित्रितयमात्रविषयकः तत्तद्विशेषत्रितयोपादानाच्च नैव सर्व्वदर्शनविषयकः, तथा च कियद्भ्यो दर्शनेभ्यो व्यावृत्तिरपि वर्त्तते प्रश्नस्येति प्रतीयते, न पुनरप्रवृत्तप्रश्नकानि तानि कानीति निर्णेतुं शक्यते । तस्मादनिच्छतापि मया सर्व्वेषामेव दर्शनानां सार्थक्यं प्रदर्श्यते ।

प्रथमतस्तावत् पुरुषार्थो दृश्यतेऽनेनेति व्युत्पत्त्यैव पुरुषार्थज्ञानसाधनतया सार्थक्यं सामान्यतः प्रतीयते दर्शनानाम् ।

ततः पुरुषार्थप्रभेदानुगतविभागपर्य्यालोचनया तेषां विशेषतोऽपि सार्थक्यं निश्चीयत एव । तथा हि पुत्र-पशु-स्त्री-परिच्छद-हिरण्यान्नादयः प्रसिद्धा अपि भुवनेष्वियन्त इति सङ्ख्यातुमशक्याः पुरुषार्थाः प्रीत्यर्थकत्वाद्गौणतरास्तथा च—"तत् सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचार" इति न्यायसूत्रम् । स पुनः प्रीत्यात्मकः पुरुषार्थो गौण एव, दुःखनिवृत्त्यर्थकत्वात् । अतो दुःखनिवृत्तिरित्येक एव पुरुषार्थो मुख्यतयावतिष्ठते । कथं सुखिभिरप्यन्विष्यमाणस्य सुखस्य दुःखनिवृत्त्यर्थकत्वमिति चेदुच्यते-तराम् । क्षणिके एव हि सुखदुःखे व्यतिविरुद्धे च, तस्मात् सुखसमकालं दुःखं नानुभूयत इति ध्रुवम् । किन्तु सुखीति परैः प्रतीयमानो विद्यमानसुखसाधनकोऽपि जनः प्रबलदुःख-विशेषेणाभिहन्यते, तन्निरोधार्थमेव सुखसाधनान्तरमपरपेक्ष्यते । यथा—"गृहाङ्गना यद्यपि चारुरूपा तथापि पुंसां परदारवार्त्ता" इति प्रायिकीयं संस्कारदुःखोद्वेजना । तथा—

निःस्वो वष्टि शतं शती दशशतं लक्षं सहस्राधिपो
लक्षेशः क्षितिपालतां क्षितिपतिश्चक्रेश्वरत्वं पुनः ।
चक्रेशः पुनरिन्द्रतां सुरपतिर्ब्रह्मास्पदं वाञ्छति
ब्रह्मा विष्णुपदं हरिर्हरपदं ह्याशावधिं के गताः ॥

इति च परिणामदुःखताड़ना । द्विविधेऽस्मिन् दुःखविकल्पे सुखाभिमानः स्फुरति संसारिणामतः स्वयमपि ते नानुशोचन्ति किमिदमापतितमिति । तथापि तापत्रयस्यैव तद्द्वितयस्यापि

निवारणार्थमेवेहन्ते । कथमन्यथा सत्येव बुभुक्षादावोदनादिकमुपयुज्यते, तत्रासति पुनरमृतादिकमपि नैव रोचत इति हेतोः सुखस्य दुःखनिवृत्त्यर्थकत्वं सुस्थितमेव ।

एवञ्च सर्वेषामेव प्रयोजनीभूतानां साक्षात्परम्परान्यतरभावेन दुःखनिवृत्त्यङ्गत्वे दुःखनिवृत्तेश्च प्रयोजनान्तरनिरपेक्षतया मूलपुरुषार्थत्वे सुनिर्णीते तादृशस्यैतरस्याभावात्तस्यैकविधत्वमपि मन्तव्यम्, तथा च—"सुखलाभाभावादपुरुषार्थत्वमिति चेन्न पुरुषार्थद्वैविध्यात्" इति साङ्ख्यसूत्रमर्थात् दुःखात्यन्तनिवृत्तिरूपे मोक्षे सुखदुःखोभयवीजसमुच्छिन्नतया साधिते सुखस्याप्रसङ्गात् पुरुषार्थता नास्तीति चेदुच्यते, तदा पुरुषार्थद्वैविध्यमापतति, तद्धि नैव सम्भवति सुखस्यापि प्रदर्शिताद्दुःखनिवृत्त्यर्थकत्वात् समुत्तीर्णसरिता नौरिव प्राप्तमोक्षेण सुखमपि निरर्थकतया नापेक्ष्यत इति पुरुषार्थस्यैकविधत्वमपि सुस्थितम् । तथाविधस्यापि पुरुषार्थस्य, दुःखानां, दुःखहेतूनां, तत्तन्निवृत्तिसाधनानाञ्च नानाविधत्वादुत्कर्षापकर्षतारतम्येन बहुधा भेदो द्रष्टव्यः ।

संक्षेपतस्तावद्दुःखं त्रिविधमिति प्रागेवोक्तम् । तत्र लोकप्रसिद्धमपि तापाख्यं दुःखं स्थानभेदादष्टादशधा बोद्धव्यम् । बुद्ध्यहङ्कार-मनः-श्रोत्र-त्वगक्षि-रसन-घ्राण-वाक्-पाणि-पाद-पायूपस्थनामकत्रयोदशकरणानां याः प्रातिस्विकवृत्तयस्त्रयोदश, याश्च सामान्यवृत्तयः प्राणाद्याः पञ्चैव तासां यथाकथञ्चिद्बाधनेव

ताप इत्याख्यायते। जन्मक्षणे मृत्युक्षणे च सर्वेषामेव तापानामुपस्थितिर्व्याधिप्रहारादिषु चान्यतमानां केषाञ्चिदनियत-संख्यकानामित्येतत् सर्व्वं सुगमम्। निमित्तभेदादाधिभौतिकाधिदैविकाध्यात्मिकसंज्ञाभिस्तापस्यैव त्रैविध्यमपि प्रसिद्धम्। तस्मात्तद्विवरणेनालम्। संस्कारदुःखं सुखस्मृतिप्रधानं परिणाम-दुःखञ्च सुखसङ्कल्पप्रधानं तयोः सुखविषयकतयैव सुखेष्वन्तर्भावः क्रियते मूढात्मभिः। अतएव साङ्ख्यसूत्रकारिकयोरादौ दुःखानां त्रित्वकथनस्यानर्थक्यमेवापातितमवुद्ध्यत्पन्नैः सुप्रसिद्धतापमात्रोप-स्थापकेनापवाख्यानेन। वस्तुतस्तु रुचिलालसात्मकाभ्यां ताभ्या-मपि राजसाभ्यां सत्त्वस्य वाध्यमानत्वात् तयोरपि तापस्यैव "वाधनालक्षणं दुःखम्" इति न्यायसूत्रोक्तदुःखलक्षणेनावरोधः समग्रगुपलभ्यते। कथमन्यथा तत्र सुखाभिमानिनोऽपि तयोरुप-शमायैव समीहन्ते। तस्मात् सर्व्वेभ्य एव तेभ्यो भृशं बिभेति विवेकी। तथा च—"परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्व्वं विवेकिन" इति योगसूत्रीयव्यासभाष्ये दुःखव्या-ख्यानात् परतः "एवमिदमनादिदुःखस्रोतो विप्रसृतं योगिनमेव प्रतिकूलात्मकत्वादुद्वेजयति, कस्मादक्षिपात्रकल्पो हि विद्वानिति। यथोर्णातन्तुरक्षिपात्रे न्यस्तः स्पर्शेन दुःखयति नान्येषु गात्रावयवेषु, एवमेतानि दुःखानि अक्षिपात्रकल्पं योगिनमेव क्लिश्नन्ति नेतरं प्रतिपत्तारम्। इतरन्तु स्वकर्म्मोपहृतं दुःखमुपात्तमुपात्तं त्यजन्तं, त्यक्तं त्यक्तमुपाददानमनादिवासनाविचित्रया चित्तवृत्त्या समन्ततोऽनुविद्धमिव अविद्यया हातव्य एवाहङ्कारममकारानु-

पातिनं जातं जातं वाह्याध्यात्मिकोभयनिमित्तास्त्रिपर्व्वाणस्तापा अनुप्लवन्ते” इति सर्व्वं सुविवृतमेव। दुःखानां निवृत्ति-साधनानीदानीं कथनीयानि। तेषु कानिचिदैहिकानि कानिचिदामुष्मिकानि कानिचिदलौकिकानि च। तत्र केषाञ्चित् साक्षाद्दुःखनिवर्त्तकत्वं केषाञ्चित् सुखोपढौकनद्वारा, केषाञ्चिद्दीर्घपरम्परयापीति यथायथमनुसन्धेयम्। ऐहिकानां मध्ये साक्षाद्दुःखनिवर्त्तकमौषधादि, प्रायशो दुःसेवतया सहसा न स्वीक्रियते जनैः। स्रक्चन्दन-वधूवस्त्रादि तु विविध-सुखसम्पादनद्वारा साक्षाद् दुःखं निवारयतीति तत्रैवासक्ति-निरूढ़ा जनानाम्। कैश्चित् किञ्चिज्ज्ञैरात्मनो लोकान्तर-सम्बन्धमनुमोदमानैर्यागाद्यनुष्ठानेन धर्म्मं सञ्चीयते च। तदिद-मैहिकानुष्ठानजन्यमामुष्मिकं धर्म्मं स्वर्गीयसुखनिष्पादनद्वारा तापप्रतिरोधकमिति साधनपारम्पर्य्यदीर्घत्वस्य दिङ्मात्रमुदा-हरणम्।

वैदेह्यप्रकृतिलयत्वनिःश्रेयसानि पुनरलौकिकानि साक्षाद्-दुःखनिवर्त्तकानि। किन्तु तेषु सुखलेशस्याप्यसम्भवादनधिकारः सुखैषिणाम्। अमी हि सुखकणरत्नलोभान्धितधियः सततं सकल-दुःखसागरेषु निमज्जन्तः पुनः पुनर्जन्मजरामरणरोगशोकादिभि-रुत्तुङ्गतरङ्गैरभिहन्यमाना अपि यादांसीव ततो न विरज्यन्ति। दुःखभीतस्तु सुधीरः प्रदीप्तगृहाग्नौ सिकतामुष्टिप्रक्षेपस्येव नैसर्गिकदुःखमये संसारे विषयसुखोपयोगस्य नैष्फल्यमुपलभ्य विरमति। तथा च शान्तिशतके—

रम्यं हर्म्यतलं न किं वसतये श्रव्यं न गीतादिकं
किंवा प्राणसमा-समागमसुखं नैवाधिकप्रीतये ।
किन्तु-भ्रान्त-पतत्-पतङ्ग-पवन-व्यालोल-दीपाङ्कुर-
च्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं गता ॥ इति

ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्त्यलोकं विशन्ति ।
एवं त्रयी धर्म्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ॥

इति श्रीमद्भगवद्गीतावाक्यात्। "समानं जरामरणादिजं दुःख"मिति साङ्ख्यसूत्राच्च स्वर्गीयमुच्चावचं सुखमपि दुःखभीरु-माश्वासयितुं नालम्। स्वर्गिणां हि परमस्मदपेक्षया सुदीर्घ-तरायुष्कत्वमित्येतावानेव विशेषः। तस्मात्तदपि विषसम्पृक्तान्न-मिव समुपेक्षते साधुः। "कुत्रापि कोऽपि सुखी न, तदपि दुःख-शबलमिति दुःखपक्षे निक्षिपन्ते विवेचकाः" इति साङ्ख्यसूत्राभ्यां सुखस्य सर्व्वस्यैवानित्यत्वं दुःखस्यैव हेयत्वं समाख्यातम्। वैदेह्ये प्रकृतिलयत्वे च तापपरिणामाभ्यां परिहीनेऽपि संस्कार-सद्भावाद्दुःखनिवृत्तेरनैकान्तिकत्वं नश्वरतयापुनरावृत्त्यवश्य-म्भावाच्च नात्यन्तिकत्वमिति। तथा च—"विदेहानां देवानां भवप्रत्ययस्ते हि स्वसंस्कारमात्रोपयोगेन चित्तेन कैवल्यपद-मिवानुभवन्तः स्वसंस्कारविपाकं तथा जातीयकमतिवाहयन्ति। तथा प्रकृतिलयाः साधिकारे चेतसि प्रकृतिलीने कैवल्यपद-मिवानुभवन्ति यावन्न पुनरावर्त्ततेऽधिकारवशाच्चित्तम्" इति भवप्रत्ययो विदेहप्रकृतिलयानामिति योगसूत्रीयव्यासभाष्ये

सुवचनाम्। इत्थं विषयेषु दोषदर्शनादुपतिष्ठति वैराग्यं दुःखभीरोः। तथा च—"दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यमिति योगसूत्रं स्त्रियोऽन्नपानमैश्वर्य्यमिति दृष्टविषयवितृष्णस्य स्वर्गवैदेह्यप्रकृतिलयत्वप्राप्तावानुश्रविकविषय-वितृष्णस्य दिव्यादिव्यविषयसंप्रयोगेऽपि चित्तस्य विषयदोष-दर्शिनः प्रसंख्यानबलादनाभोगात्मिका हेयोपादेयशून्या वशीकार-संज्ञा वैराग्यमिति भाष्यञ्च। लब्धवैराग्यस्यापि जन्ममृत्यु-परम्परापरिपीड़ितस्य महती व्याकुलता प्रवर्त्तते, सैषावस्थापि—

"यश्च कामपरो लोके यश्च बुद्धेः परं गतः।
उभौ तौ सुखमेधेते क्लिश्यत्यन्तरितो जनः॥

इत्येवं महाभारतादावुक्तं तदवस्थेन तेन यत् क्रियते तदेव च दुःखस्तृतीयभाष्ये प्रोक्तं यथा तदेवमनादिदुःखस्रोतसा व्यूह्यमान-मात्मानं भूतग्रामञ्च दृष्ट्वा योगी सर्व्वदुःखक्षयकारणं सम्यग्दर्शनं शरणं प्रपद्यत इति। प्रागुक्तालौकिकात्तिमदुःखनिवृत्तिसाधनं निःश्रेयसमेतस्मादेवालोकात् सम्यग्दर्शनं निष्पद्यत इत्यस्यै-वोपायश्चिन्तनीयः।

इत्युपक्रमाख्यः प्रथमः परिच्छेदः ॥१॥

——०——

# द्वितीयः परिच्छेदः।

सम्यग्दर्शनं हि समीचीनं ज्ञानं तत् केनोपायेनासादनीयमिति निर्व्विसस्य प्रश्ने विपुलविद्वत्परिषदि समुपस्थापिते नैकोऽपि तुष्णीं स्थास्यति। तं हि निर्व्विसं पुरुषं प्रति चार्व्वाकदर्शनविदो वक्ष्यन्ति—अहो मुधा भ्रान्तोऽसि त्वमनृतव्याघातपुनरुक्तदोषजटिलैर्व्वेदवाक्यैः। हन्त! देहोच्छेद एव मोक्षः, स तु स्वभावादेवागमिष्यति, नातः परं ते किञ्चिदपि स्थेयात्। तस्मादङ्गनालिङ्गनादिजन्यं सुखमेव पुरुषार्थो गृह्यताम्। अवर्ज्जनीयदुःखसम्भिन्नतया सुखं परिहरता नात्मवञ्चना कार्य्या। किं बहुनोक्तेन—

> त्याज्यं सुखं विषयसङ्गमजन्म पुंसां
> दुःखोपसृष्टमिति मूर्खविचारणैषा।
> को नाम भोस्तुषकणोपहितान् हितार्थी
> व्रीहीन् जिहासति सितोत्तमतण्डुलाढ्यान्॥

सुतरामितावदेव सम्यग् दर्शनं गृहाणेति। बौद्धदर्शनानुरागिणो वक्ष्यन्ति—क्षणभङ्गरेऽस्मिन् योगाचारावस्मद्दर्शनोक्तावलम्ब्य दुःखमायतनं समुदायो मार्गश्चेति चत्वारि तत्त्वानि पर्य्यालोच्य भगवान् सुगतो देव उपास्यतां ततस्ते स्वयंप्रकाश

बुद्धिः शान्तिं लभते। यद्यपि चतुःप्रस्थानिका वयं तथापि रागादिज्ञान-सन्तानवासनाच्छेदजनैव मुक्तिः सर्व्ववादिसम्मतेति।

जैनदर्शनविदो वक्ष्यन्ति—क्षित्यादिसकर्त्तृकं घटादिवदित्यनुमानेन यः सर्व्ववित् सर्व्वकर्त्ता निर्णीयते, स एवार्हन् परमेश्वर उपास्यतां ततस्ते जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षेषु सप्तसु तत्त्वेषु श्रद्धानं यदुदेष्यति, तदेव सम्यग्दर्शनं ज्ञानचरित्राभ्यां सह मोक्षमार्गस्त्वया गन्तव्य इति। तथा-नकुलीशपाशुपतदर्शन-शैवदर्शन-प्रत्यभिज्ञादर्शन-रसेश्वरदर्शन-विदो यथास्वकर्म्मपद्धतिसहितया महेश्वरोपासनया पूर्णप्रज्ञादि-दर्शनविदश्च तथा विष्णूपासनया मुक्तिमुपदेक्ष्यन्ति।

अथार्षदर्शनैकदेशदर्शिनामपि मीमांसकब्रुवाः फलाभिसन्धि-रहितैः कर्म्मभिरेव परमपुरुषार्थः सम्पद्यत इति। नैयायिक-ब्रुवाः प्रमाणादिनिग्रहस्थानान्तषोड़शपदार्थतत्त्वज्ञानादेव निःश्रेयसं प्राप्यत इति। वैशेषिकम्मन्याः द्रव्यगुणकर्म्मादिषट्पदार्थ-तत्त्वज्ञानादेव निःश्रेयसं स्यादिति। साङ्ख्यज्ञमानिनः पञ्च-विंशतितत्त्वज्ञो यत्र तत्राश्रमे वसेत्। "जटीमुण्डी-शिखी वापि मुच्यते नात्र संशय" इति कृतार्थतां ज्ञापयन्ति। योगविज्ञानिन-श्चासंप्रज्ञातसमाधिनैवाविद्यानाशात् कैवल्यं वर्णयन्ति। बहु-शास्त्रकृतो व्यासस्य ब्रह्ममीमांसायामपि नानाभाष्यकारप्रवर्त्तित-विविध-बहुसंप्रदायाः शास्त्रान्तरनिरपेक्षादद्वैतभावनामात्रात् किल कैवल्यमावोषयन्ति। हन्तेदानीं किं करोतु निर्व्विस-स्तपस्वी।

हे समितिप्रवर्त्तका महात्मानः ! मन्ये भवन्तोऽपि सर्व्वदर्शनसंग्रहकृन्माधवाचार्य्यवत् साम्प्रदायिकवेदान्तवादानुवर्त्तिनः, कथमन्यथा तृतीयपञ्चमषष्ठेषु प्रबन्धनिर्द्देशवाक्येषु षसामार्षदर्शनानां मध्ये विना वेदान्तं सर्व्वाण्येवोल्लिखितानि। हन्त भोः यदि व्याससूत्रे शारीरकभाष्यमेव प्रमाणीकृतं भवद्भिस्तदा किमिति साङ्ख्ययोगपाशुपतादिदर्शनसार्थक्यमिति प्रश्नावतारः कृतः ? तेन हि शारीरकभाष्यकारेणाविरोधाध्यायमपि खण्डनाध्यायीकुर्व्वता सर्व्वाण्येवान्यदर्शनादीनि तुच्छीकृतानि। किं बहुनोक्तेन—"आदि विद्वान् निर्म्माणचित्तमधिष्ठाय कारुण्याद्भगवान् परमर्षि रासुरये जिज्ञासमानाय तन्त्वं प्रोवाच" इतीत्येवं योगभाष्यादिषु बहुषु ग्रन्थेषु यस्य महिमा ब्रह्मसूत्रकृता कीर्त्तितस्तस्यैवालीकलोकतापि तेनैव भाष्यकृता परिकल्पिता।

स्वस्यापि पुनरलीकशङ्करतामेवावस्थाप्य सुस्थिरैवान्धपरम्परा च कलिप्रभावात् प्रसारिता। पुरा किल बौद्धादिवादेषु प्राप्तप्राबल्येषु तेभ्यो मुक्तिशास्त्रं परिपातुं शङ्करनामावतारः षट्सु दर्शनेषु व्याख्यानं नियोजितवानिति वृहद्धर्म्मपुराणादाववलोक्यत एव। तस्मिन् धर्म्मग्लानिहारप्रतिसृष्टे पुनरेव यदा बौद्धसम्प्रदायाः पृथिव्यामेकसम्प्रदायचिकीर्षया कालमाहात्म्यलब्धमहिमानः क्रमशः समुच्छिद्यापि शाङ्करग्रन्थांस्तेषु जनानुरागमुच्छेत्तं न शेकुस्तदा तेषामेव कश्चिदान्विचिकीर्दुर्व्विचक्षणः समध्यासितशङ्करमठः "परकीयशरीरप्रविष्टः शङ्करोऽयम्" इति स्वगछैरेव शनैः परिवर्द्धमानैर्निजालीकतां प्रख्याप्य शारीरक-

भाष्यं प्रणीय प्रचारितवान्। यस्यैवानुच्छेदार्थमद्यापि देदीप्य-मानां शङ्करासनासीनशङ्कराचार्य्यपरम्पराञ्च प्रवर्त्तयामास। तिष्ठतु तावदाम्नानुपदिष्टतया यथेष्टविवदनीयमेतदिति वृत्तम्। अस्माभिस्तु शास्त्राभिनिवेशिभिरितिवृत्तानपेक्षिभिरेव बहुधा बहुलदोषजुष्टं तद्भाष्यं परिज्ञाय नेदं शिष्टकृतं स्यादिति शङ्करगौरवमेवाभिरच्यतेतराम्। विमूढैः पुनर्यथोपलब्धनिष्ठाकै-रिदमेव भाष्यं शङ्कराचार्य्यकृतमिति शङ्करकलङ्कमेव व्यवस्थाप्य स्वदोषसहजान्धत्वतया ह्यस्मानेव शङ्करावज्ञाकारिणो ब्रुवते। निरपत्रपमीदृग्वैपरीत्यमप्यविद्यायाः स्वभावः, यद्वशेन वहिः स्फुटानपि वृहतो दोषाननन्यसुलभान् गुणानेव किल ते मन्यन्ते। तस्य हि भाष्यस्यादित एव यदेकैकसूत्रव्याख्यायां "प्रथमं वर्णकमारचयति द्वितीयं वर्णकमारचयति तृतीयं वर्णकमारचयति" इत्येवं सूत्रकृद्विवक्षितार्थग्रहणार्थकमाकुला-यितमेव दृश्यते, ततोऽपि किं व्याख्यातुरज्ञतायाः परिचयोऽव-शिष्यते? व्याखेययसूत्रार्थावगमे हि व्याख्यातुः सन्देहा-नवकाशेन व्याख्यान्तरानवकाशस्य नियमितत्वेऽपि यदि तादृ-गाड़म्बरो व्याख्यातुरकाण्डश्लेषपाण्डित्यमेव प्रतिष्ठापयेत्तदानीं "अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम्। अस्तोभमनवद्यञ्च सूत्रं सूत्रकृतो विदुः॥" इत्येवं वायुपुराणादुक्तसूत्रलक्षणहानेः स्फुटपञ्चाधिकरणकानि व्याससूत्राण्यपि सन्दिग्धार्थकतारोप-कलुषितानि विरचय्य तेन भाष्यकृता जगति को नाम नावधीरितो वक्तव्यः।

किं पुनर्बहु वक्तव्यम्, भाषग्रस्यास्य निखिलदोषाणां पर्य्यालोचनायां विपुलेन ग्रन्थान्तरेणैव भवितव्यम्। तेषां प्रावल्यबाहुल्यं पश्यतामपि सत्याभिनिवेशिनां विदुषां तस्मिन्नाप्तवागित्यास्था कथमपि नोपस्थातुमवस्थातुं वा शक्नुयात्। आप्तोपदिष्टञ्च दुष्टवचनञ्चेत्यनयोः खलु कदापि तेजस्तिमिरयोरिव सामानाधिकरण्यं न स्यादिति केन वा स्वाधीनधिया नावधारणीयम्। सुतरां भवतामपि कियतां प्राच्यपाश्चात्यविविधदर्शनालोड़नशिथिलीकृतवृथाभिमानानां तत्र भाषेर कथञ्चिदनास्थैवोच्चिन्ना परिलक्ष्यते साङ्ख्यादिसार्थक्यविषयकप्रश्नोपस्थापनात्, प्रागपि वाढ़ं परिलक्षिता च साङ्ख्योपाधिपरीक्षायां वेदान्तीयद्वितीयाध्यायस्य प्रथमद्वितीयपादयोरेव सटीकशारीरकसंहितयोः पाठ्येषु प्रवेशनात्। तस्मान्मयापि सम्प्रदायविद्वेषभयपरिगृहीतं मौनमपहाय श्रवणोत्सुकानां महतां पुरतः पुरुषार्थप्रभेदकृतपार्थक्यं सर्व्वेषामेव दर्शनानां सार्थक्यं क्रमशः सप्रमाणमुपस्थापयितुमादौ सम्यग्दर्शनद्वारा प्रक्रान्तपुरुषार्थसाधनमेव निरूप्यते।

इति शङ्करकलङ्कोच्छेदाख्यो द्वितीयः परिच्छेदः ॥२॥

———०———

# तृतीयः परिच्छेदः ।

तत्राप्तोपदेशेषु षड्‌दर्शनमेव सम्यगदर्शनैकोपायत्वात् सामान्यतः प्रकृतपुरुषार्थसाधनमिति प्रतिज्ञायते। आप्ताः के नामेत्याकाङ्क्षायां भ्रमप्रमादविप्रलिप्साकरणापाटवरूपदोषचतुष्टयरहितत्वमाप्तत्वमिति सुप्रसिद्धमेव तल्लक्षणं सामान्यतो ग्राह्यं विशेषतश्च "आप्तास्तावत्—

रजस्तमोभ्यां निर्म्मुक्तास्तपोज्ञानबलेन ये।
येषां त्रैकालममलं ज्ञानमव्याहतं सदा ॥१॥
आप्ताः शिष्टा विबुद्धास्ते तेषां वाक्यमसंशयम्।
सत्यं वदन्ति ते कस्मादसत्यं नीरजस्तमाः ॥२॥"

इत्येवं चरकीयसूत्रस्थानादौ द्रष्टव्यम्। अनार्षदर्शनानां गौणपुरुषार्थसाधनत्वं पश्चादेव प्रतिपादयिष्यते। प्रतिज्ञाते षड्‌दर्शनस्य परमपुरुषार्थसाधनत्वे प्रथमं तावदिदमेवालोचनीयं यदेतानि दर्शनानि किं प्रस्थानभेदाः किं वैकप्रस्थानमिति। तत्रावुग्रत्पन्नैरन्योन्यं विवदमानैः प्रवरादिभिः प्रस्थानभेदपरिकल्पनया यो महान् व्यामोहः प्रवर्त्तितः स हि तदाप्तवचसां

सामञ्जस्यमभिनिविशमानैर्महात्मभिः सुदूरमपसारणीयः। दर्शनानामेषां तथात्वे हि "नान्यः पन्था विद्यतेऽयनाये"ति श्रुतिविरोधभिया कस्यचिदेकस्यैव प्रोक्तसार्थक्यमङ्गीकृत्यान्येषामानर्थक्यमेवापात्यते शारीरकभाष्योक्तदिशा। ततश्च सर्व्व एवैकदेशिनो यथा पूर्व्वं विवदिष्यन्ते, न तु युगशतसहस्रैरपि सामञ्जस्यमुपलभ्येत भवद्भिः। तस्मात् सर्व्वाण्येव साम्प्रदायिकमतानि वह्निप्रलेपकभस्मवत् फुत्कारेणोत्क्षिप्य संदृश्यतामार्षविज्ञानालोकः।

यदेवमार्षदर्शनानामेकप्रस्थानत्वं मया प्रस्तूयते, तदप्यभिनवसाम्प्रदायिकवादोपस्थानमिति तु न पुनः शङ्कितव्यं भवद्भिः। मया हि विहायार्षवाक्यं नैकमप्यक्षरमभिधास्यते सामञ्जस्यसिद्धान्तायेत्यनुसन्धातव्यमेव। वेदान्तदर्शनीय-तृतीयाध्यायचतुर्थपादे—

पुरुषार्थोऽतः शब्दादिति वादरायणः ॥१॥
शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥२॥
आचारदर्शनात् ॥३॥
तच्छ्रुतेः ॥४॥
समन्वारम्भणात् ॥५॥
तद्वतो विधानात् ॥६॥
नियमाच्च ॥७॥
अधिकोपदेशात्तु वादरायणस्यैवं तद्दर्शनात् ॥८॥
तुल्यन्तु दर्शनम् ॥९॥

इत्येतेषु नवसूत्रेषु निष्कृतीकं प्रणिधीयतां निपुणतमैर्भवद्भिरशेष-देशीय-दर्शनकुशलैरुज्झितयथोपलब्धनिष्ठार्कैः। सर्व्वत्र सूत्रकृतां स्वोक्तेषु दुरूहणीयांशव्याख्यानाय सूत्रान्तरं बहुशो दृश्यते। यथा—"चोदनालक्षणोऽर्थो धर्म्म" इति सूत्रस्थचोदनाशब्दव्याख्यानाय "चोदना पुनरारम्भ" इति जैमिनेः सूत्रान्तरमस्ति, दिङ्मात्रमिदं मया प्रदर्शितम्। तथैवात्र वादरायणस्याप्येतदादिमं सूत्रं ग्रन्थादिमसूत्रस्थस्यातःशब्दस्य व्याख्यानायैवारब्धं वेदितव्यम्। तथाहि "अथातो ब्रह्मजिज्ञासा" इत्यत्र अथेत्यधिकारानन्तरम् अतः प्रयोजनाद्ब्रह्मजिज्ञासा भवतीति "प्रथमसूत्रस्य निष्कृष्टोऽर्थः, तत्र कुतः प्रयोजनादित्याकाङ्क्षाया दुष्पूरतया स्वयं सूत्रकृता व्याख्यायते प्रथमसूत्रस्यादतः शब्दात् पुरुषार्थो बोद्धव्य इति वादरायणो वक्तीति शेषः। निर्व्वाणमात्रं पुरुषार्थ इति मया प्रागेव स्फुटीकृत्य प्रदर्शितम्। तदेवात्र ब्रह्ममीमांसायाः साक्षात् प्रयोजनमिति प्राप्तम्। ननु वादरायणो वक्तीत्यनेन पुनरन्यथापि कश्चिद्वक्तीत्याक्षिप्तं तत् कथम्भूतमित्याकाङ्क्षायामाह" शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिरिति द्वितीयसूत्रम्। जैमिनिराचष्टे "अथातो धर्म्मजिज्ञासे"ति मदीयसूत्रे अतः शब्दात् पुरुषार्थवादो बोद्धव्य इति। पुरुषार्थं विहाय पुरुषार्थवादः कथं प्रयोजनीक्रियते इत्याशङ्कायां शेषत्वादिति, पुरुषार्थवादस्यापि पुरुषार्थाङ्गत्वादित्यर्थः। तथा च यथान्येषु न्याय-वैशेषिक-सांख्य-योगेषु पुरुषार्थाङ्गानामेव प्रयोजनत्वं तथात्रापि पुरुषार्थवादस्येति दृष्टान्तोपन्यासेन प्रोक्तं दृढ़ीकृतम्।

ननु वस्तुवादस्य वस्त्वङ्गत्वं कथमुपपद्यत इत्याकाङ्क्षायामाह "आचारदर्शनादि"ति तृतीयसूत्रम् । दृश्यते हि लोके विवाहादिकर्म्मणः प्रस्तावोऽपि शुभेऽहनि क्रियते, यदि नैतस्य तदङ्गत्वं कुतस्तस्यैवास्यापि शुभक्षणापेक्षा स्यादतस्तादृशाचार-दर्शनात् पुरुषार्थवादस्य पुरुषार्थशेषत्वमस्त्येवेति । नन्वन्येषा-मपि चतुर्णां दर्शनानां पुरुषार्थाङ्गैरेव प्रयोजनवत्त्वे न्यायस्य कुतः पुरुषार्थाङ्गादर्थवत्वमित्याकाङ्क्षायामाह "तच्छ्रुतेरि"ति चतुर्थसूत्रम् । तस्य पुरुषार्थस्य श्रुतेः श्रवणान्न्यायदर्शन-स्यार्थवत्त्वमित्यर्थः ।

ननु वैशेषिकस्य कस्मादर्थवत्त्वमित्याकाङ्क्षायामाह "समन्वा-रम्भणा" दिति पञ्चमसूत्रम् । पुरुषार्थसम्यगारम्भाद्वैशेषिक-स्यार्थवत्त्वम् । वैशेषिकोक्तज्ञानकर्म्मभ्यां हि पुरुषार्थस्यारम्भो भवतीति प्रतिपादयिष्यते ।

ननु साङ्ख्यस्य कुतोऽर्थवत्त्वमित्याकाङ्क्षायामाह "तद्वतो विधाना" दिति षष्ठसूत्रम् । तद्वतः समन्वारम्भणवतः पुरुषार्थस्य विधानात् स्फुटीकरणादर्थाद्दुःखवीजस्य किल क्लेशादिरूपस्य तनूकरणेन दुःखनिवृत्तेर्विशेषकरणात् साङ्ख्यदर्शनस्यार्थवत्त्वमिति ।

ननु योगस्य कुतोऽर्थवत्त्वमित्याकाङ्क्षायामाह "नियमाच्चे"ति सप्तमसूत्रम् । तस्य पुरुषार्थस्य नियमादवश्यम्भाविता-पादना-दर्थात् सत्त्वपुरुषान्यताख्यातिनिष्पादनाद्योगदर्शनस्यार्थवत्त्व-मिति । चकारोऽस्मिन् सूत्रे प्रक्रमपरिच्छेदसूचकः । इत्थं

पञ्चानां दर्शनानां पुरुषार्थाङ्गत्वत्तथा सार्थकत्वे साधिते पुनरस्मादेव सूत्रात् शङ्कान्तरमुदेति प्रसभम्।

ननु योगदर्शनपर्य्यन्तेनैव यदि पुरुषार्थो नियम्यते तदा वेदान्तदर्शनेनालम्। इत्यपेक्षायामाह—"अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शना"दित्यष्टमसूत्रम्। योगजन्यसत्त्वपुरुषान्यताख्यात्या पुरुषार्थो नियम्यते सत्यं किन्तु बादरायणस्याधिकोपदेशात् कैवल्यार्थकाद्वैतोपदेशात् पुरुषार्थः समाप्यते। एवमित्थं वेदान्तोपदेशादेव तस्य कैवल्यस्य दर्शनादिति।

ननु यतोऽधिकोपदेशात् पुरुषार्थः साक्षात् सम्पद्यते स एव निर्व्विशेषोपादेयः, किमन्यैः पूर्व्वपूर्व्वोपदेशैरिति हठवेदान्तिनां व्यामोहस्योच्छेदनाय नवमं सूत्रम् "तुल्यन्तु दर्शन"मिति। वेदान्तादेव साक्षात् पुरुषार्थः सम्पद्यते इति सत्यं किन्तु दर्शनं तुल्यं निर्व्विशेषस्य सर्व्वमेवैतत् षड्दर्शनमुपादेयं न हि तत्र कस्यापि हेयता स्यात्। तथाहि यथा क्षुत्प्रतीकारार्थिना क्षेत्रनिर्म्माण-वीजाकरण-धान्याहरण-वितुषीकरण-पचन-भक्षणानि क्रमसम्पाद्यतया तानि सर्व्वाण्येवाङ्गीकार्य्याणि तथैव खलु मीमांसा-न्याय-वैशेषिक-साङ्ख्य-योग-वेदान्तदर्शनानि क्रमाधिकार्य्यतया सर्व्वाण्येवानुपेक्षणीयानि निर्व्वाणार्थिनापि। तथापि हठवेदान्तिनां या गतिः स्यात् सापि यथास्थानमेव वक्ष्यते मया।

तदेवं षण्णामेव दर्शनानां साक्षात् परम्परान्यतरसम्बन्धेन पुरुषार्थसाधनत्वं प्रदर्शितम्। यत्र यत्र विशेषतः साधनत्वं

तत्तत् प्रसङ्गादुक्तमपि कथञ्चित् समालोच्यते भवतामभिनिवेश-सौकर्य्याय ।

इति सामञ्जस्योद्घाटनाख्यस्तृतीयः परिच्छेदः ॥३॥

——०——

## चतुर्थः परिच्छेदः ।

वेदस्याप्रामाण्यनिषेधाय सर्व्वस्यैव तस्य क्रियार्थकत्वं जैमिनिना व्यवस्थापितम्, न च भगवान् जैमिनिर्वेदैकदेशदर्शीति मन्तव्यम्, तस्मात्तेन किल "चोदना लक्षणोऽर्थो धर्म्म" इति सूत्रे यागयोगोभयसाध्यस्य धर्म्मसामान्यस्यैव लक्षणं कृतमित्यसंशय-मेव । "सर्व्ववेदान्तप्रत्ययं ब्रह्मचोदनाद्यविशेषा"दिति व्यास-सूत्रादप्युपनिषद्भागे कर्म्मविधिर्नास्तीति मूर्खप्रतिपत्तिर्नैवानु-सर्त्तव्या । ततश्च धर्म्मलक्षणानन्तरं प्रश्न उत्तिष्ठति "व्यति-विरुद्धानुष्ठान-साध्ययोः धर्म्मयोः कस्य परीक्षा पुरुषेण कार्य्ये"ति । "तस्य निमित्तपरीष्टिः" इति तदुत्तरसूत्रम् । तस्य धर्म्मस्य निमित्तात् प्रयोजनात् परीष्टिः परीक्षा कार्य्येति तदर्थः । अर्थादपवर्गार्थिना योगोऽनुष्ठेयः, स्वर्गार्थिना च याग इति निष्कर्षः ।

ननु द्वीपिहननस्य निमित्तं चर्म्मेव धर्म्मस्य निमित्तं किञ्चिदपि न दृश्यते, तथापि कथं नामानिश्चितेऽर्थे धीमता प्रवर्त्तितव्यमित्याशङ्कायामाह,—"सत्सम्प्रयोगे पुरुषस्येन्द्रि-याणां बुद्धि-जन्म-प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वा"दिति । इन्द्रियाणां सता वस्तुना सम्प्रयोगे पुरुषस्य यद्बुद्धिजन्म

भवति तत् प्रत्यक्षमर्थादेतादृग्लौकिकं प्रत्यक्षमत्रानिमित्तमत्रोक्तधर्म्मविषयकं न भवति, तस्य विद्यमानवस्तुविषयकोपलब्धिसाधनत्वादिति ।

नन्वेवं तत्तद्धर्म्मनिमित्तमत्यन्तासदेवेति किं न वेति कथमवगन्तव्यमित्याकाङ्क्षायां तदनन्तरसूत्रद्वयं "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वादिति कर्म्मैकेतत्दर्शनादिति चाह । व्याख्याविस्तरेणालमादेयेन बादरायणाद्येय सुख्यपुरुषार्थं प्रति श्रुतेः प्रामाण्यमन्येन स्ववक्तव्यगौणपुरुषार्थं प्रति वेदोक्तकर्मणः प्रामाण्यञ्चाभिहितं कर्म्ममीमांसा कृता । सुतरामत्र प्रागुक्तपुरुषार्थाङ्गपुरुषार्थवादः सुस्थित एव । तेन स्वयमविवरणीयतयैव मुख्यपुरुषार्थस्यात्रानुल्लेखे तु जैमिनिकथितं कर्म्मापि कैवल्यस्य मार्गान्तरमिति महामूर्खाणां प्रतिपत्तिः सुदृढ़ीभूय सुधियामप्यधिकारिणां प्रवृत्तिबाधकान् वितर्कानेवाजनयिष्यत् । तथाहि यदि ऋषिमीमांसिते कर्म्मब्रह्मणी द्वे एव कैवल्यप्रदे तदा सम्भवत्येवेच्छाविकल्पे किमर्थं "नान्यः पन्था विद्यतेऽयनाये"ति श्रुतिरिमं बाधते । किं श्रुतिरेवैषा गौणी, किंवा कर्म्मब्रह्मवादयोरेकतरस्यानार्षत्वमुत पुरुषार्थस्यैव द्वैविध्यमथवा कदाचिदृषिष्वपि कस्यचित् क्वचिद्विद्यावैकल्यमिति पाषण्डमतमभ्युपगम्यापि निर्द्धारणाय चिरमेव विवदितव्यमाहोस्विदविरोधवैकल्यादलौकिकफलेष्वनास्थया तत्तत्प्रवर्त्तकानि शास्त्राणि सर्व्वथैव परिहर्त्तव्यानीत्येवं बहुविधा

एवानर्थकरा वितर्काः समभविषन्। तस्मात्सुखप्रपुरुषार्थसमात्र वार्त्तामात्रमपि तं प्रत्यनास्थानिवारकतयैवोपकारकत्वादङ्गत्व-मलभतेति सुधीभिरनुभूयताम्।

इत्यादयदर्शनार्थसूचकश्चतुर्थः परिच्छेदः ॥४॥

—:०:—

## पञ्चमः परिच्छेदः ।

जन्ममरणादुद्वेजितस्य नश्वरश्रेयोविरक्तस्य यदा “ननु श्रेयोभ्यो निर्गतः कश्चित् पुरुषार्थोऽस्तीति न प्रतीयते, न चानधिगतेऽर्थे सिषाधयिषासम्भवः, तस्मात् स कुतोऽधिगन्तव्य इति जिज्ञासा समुत्पद्यते, तदा तं प्रत्येव गौतमसूत्राणि । प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्तावयव-तर्क-निर्णय-वादजल्प-वितण्डा-हेत्वाभासच्छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम” इत्याद्यसूत्रं तदुत्तरम् । प्रमाणादिनिग्रहस्थानान्तानां षोड़शपदार्थानां याथार्थ्यज्ञानान्निःश्रेयसस्य श्रेयोविनिर्गत-पुरुषार्थस्याधिगमो ज्ञानं भवतीति शेषः ।

ननु पुरुषैर्दुःखभीरुभिर्दुःखहानायैव श्रेयः प्रार्थ्यते, तदपवर्ज्जितमन्यत्तु कुतो नाम प्रार्थनीयं स्यादित्याकाङ्क्षायामाह “दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग” इति द्वितीयसूत्रम् । दुःखादिमिथ्याज्ञानान्तानामुत्तरोत्तरापाये सति तदनन्तरापायो भवति तस्मात् प्रयोजनादपवर्गः प्रार्थनीय एवेति शेषः । चरमपुरुषार्थस्य हि दुःखहानस्य साक्षात् साधनयोः श्रेयोनिःश्रेयसयोराद्यं स्वसत्तया दुःखानि कतिचित् कदाचित् प्रतिरुणद्धि, द्वितीयन्तु समूलमेव निःशेषं

दुःखमुच्छिनत्तीत्यत एवास्य परमपुरुषार्थत्वमेव सुप्रसिद्ध' तदेतत् सर्व्वं मिथ्याज्ञानादुल्लेखेन स्फुटमेवावगम्यते। न चेदत्र दुःखापायादपवर्ग इत्येतावदेव सूत्रमभिवक्ष्यदिति सुधियां सुगमम् ।

तर्हीदानीं तत्सामान्यज्ञानाय प्रमाणादय एव निर्द्दिश्यन्ता-मित्याकाङ्क्षायां तृतीयादिसूत्राणामवतारस्तत्र चतुर्षु प्रमाणेषु सूत्रितेषु, ननु निःश्रेयसं हि नः प्रमेयं शब्दप्रमाणमात्रसाध्य' तथापि कुतः प्रत्यक्षादि प्रमाणत्रितयमुपन्यस्तमित्याकाङ्क्षायामाह "आत्मशरीरेन्द्रियार्थ-बुद्धि-मनः-प्रवृत्ति-दोषप्रेत्यभाव फलदुःखाप-वर्गास्तु प्रमेय''मिति निःश्रेयसं हि वः प्रमेयमिति सत्यमेव किन्तु आत्मशरीरेन्द्रियार्थबुद्धि-मनः-प्रवृत्तिदोष प्रेत्यभाव फल-दुःखापवर्गा अपि सर्व्वं प्रमेयमिति शेषः। आत्मादिदुःखान्तानां ज्ञानं विना केवलस्यापवर्गस्य ज्ञानं नहि सम्भवतीत्यतस्तदङ्गतया तेषामपि प्रमेयत्वमावश्यकमिति निर्गलितार्थः। सुतरां साङ्गमपवर्गं प्रति प्रमाणचतुष्टयस्यैवोपयोग इति निर्णयः। एवञ्च तच्छ्रुतेरिति यन्न्यायदर्शनस्य विशेषप्रयोजनमुक्तं तदिह सुस्थितमेव।

ततश्च षोड़शपदार्थज्ञानान्निःश्रेयसलाभ इति व्यामोहः सुदूरमपसारणीयः। तथात्वे हि प्रमाणादीनां तत्त्वज्ञानान्निः-श्रेयसमित्येतावदेवाखेऽयमभविष्यन्न तु सूत्रेप्यनावश्यकलाभार्थ-काधिगम-शब्दप्रयोगोऽङ्गीकार्य्यः। किं बहुनोक्तेन प्रति-पित्सितापवर्गनिरूपणानन्तरमेव तत्साधनाकाङ्क्षायां हि

"तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः ॥ ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवाद" इति सूत्राभ्यां श्रुतमोत्तस्योत्तरोत्तराधिकाराणां सुविस्पष्टाभिधानेऽपि कथमज्ञानामसम्बद्धप्रलापैर्मतिमन्तोऽपि विप्रलब्धव्याः स्युरिति विस्तरेणालम् ।

इति द्वितीयदर्शनार्थसूचकः पञ्चमः परिच्छेदः ॥५॥

—:०:—




# षष्ठः परिच्छेदः ।

ततः श्रुतमोक्षं मुमुक्षुं प्रत्युच्यते कणादेन—"अथातो धर्म्मं व्याख्यास्याम" इति प्रथमसूत्रम् । अथ श्रुतमोक्षस्याधिकारे अतो मोक्षारम्भणप्रयोजनाद्धर्म्मं विशेषेणाख्यास्याम इति । ननु यतो मोक्षनिष्पत्तिः स्यात् तदनाख्याय किमर्थं व्याख्यायते धर्म्ममित्याशङ्कायामाह—"यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म्मः" इति द्वितीयसूत्रम् । यस्मादभ्युदयनिःश्रेयसयोः सिद्धिर्भवति स सर्व्वो धर्म्म इत्युच्यते । ननु वेदस्यैकांशे यागादिकमपरांशे च श्रवणादिकमुपदिष्टं तत्सर्व्वमेव किं धर्म्मजनकमित्याकाङ्क्षायामाह—"तद्वचनादाम्नायस्य प्रामाण्यम्" इति तृतीयसूत्रम् । तस्य धर्म्मस्य वचनादाम्नायस्य प्रामाण्यमङ्गीकृतमिति शेषः । अर्थात् कर्म्ममीमांसायां समस्तस्य वेदस्य क्रियार्थकत्वकथनादेव धर्म्मार्थकत्वमाख्यातं नह्यनर्थिका क्रिया वेदोपदिष्टा सम्भवति, तथात्वे ह्यननुष्ठानलक्षणमप्रामाण्यमेवापततीति भावः ।

ननु मिथ्योपलब्धिविनाशस्तत्त्वज्ञानादिति न्यायोक्तेस्तेनैव श्रवणादिक्रियायाः सार्थकत्वे सम्भवत्यपि किमिति श्रवणादिजन्यं धर्म्मान्तरमिष्यते भवद्भिरित्याकाङ्क्षायामाह—"धर्म्मविशेष-

प्रसूताद् द्रव्य-गुण-कर्म्म-सामान्य-विशेष-समवायानां साधर्म्य-वैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयस''मिति तुरीयसूत्रम् । योगज-संस्काररूपादशुक्लाकृष्णाख्यात् धर्म्मविशेषात् प्रसूतं द्रव्यादिगत-साधर्म्य-वैधर्म्यद्वारेण तत्त्वविषयकं यज्ज्ञानं तस्मान्निःश्रेयसं स्यादिति शेषः । श्रवणमात्रात् तत्त्वेषु सामान्यज्ञानमेव सम्भवति तेषु विशेषज्ञानं पुनर्योगजसंस्कारात्मकधर्म्मादेव सम्भवेत्, तदपि तु द्रव्यादीनां साधर्म्म्यवैधर्म्म्यद्वारोक्ततैवोपतिष्ठत इति निर्गलितार्थः ।

मुमुक्षुणा हि तत्त्वजिज्ञासुना प्रागनुभवनीयस्तत्त्वस्थूलोप्यणुः पदार्थपर्य्यालोचनां विना सामान्यतोऽपि नावधार्य्यते । सुतरामिह दर्शने तत्त्वज्ञानारम्भाय या पदार्थविद्या तत्त्व-साक्षात्कारोचितधर्म्मविशेषारम्भाय चाहिंसाया अवदातीकरणं कर्म्मापि यदाख्यायि, ताभ्यामेव मोक्ष आरभ्यते इत्यत एवोक्तं समन्वारम्भणाद्वैशेषिकदर्शनस्यार्थवत्त्वमिति । "उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः तथैव ज्ञानकर्म्माभ्यां जायते परमं पद" मित्येवं योगवाशिष्ठादौ प्रसिद्धं मोक्षस्य ज्ञानकर्म्मोभया-रभ्यत्वं श्रुतिरपि कथयति—"ज्ञानकर्म्मणी तं समन्वारभेते" इति । ततश्चात्र काचिदपि विप्रतिपत्तिः सुधीभिर्नानुसरणीयेति विस्तरेणालम् ।

इति तृतीयदर्शनार्थसूचकः षष्ठः परिच्छेदः ॥६॥

—:०:—

# सप्तमः परिच्छेदः ।

इत्थं समन्वारम्भणवतो मोक्षस्य विधानाधिकारे ननु "तदनारम्भे आत्मस्थे मनसि शरीरस्य दुःखाभावः सयोगः" इति वैशेषिकोक्तेः सन्निकर्षाणारम्भे परं दृढ़ाभ्यस्ते कृतार्थतायाः सम्भवान्मोक्षसम्पादनोचिततत्त्वज्ञानार्थकप्रयासप्राचुर्य्येणालमिति प्रश्नस्यैवोत्तराय कापिलसूत्रम्—"अथ त्रिविधदुःखात्यन्त-निवृत्तिरत्यन्तपुरुषार्थः" इति । न तु सामयिकतापनिवृत्ति-मात्रं पुरुषार्थ इत्यवगम्यतेतराम्, सूत्रमिदं मया पुरुषार्थ-निरूपणप्रसङ्गेन सम्यगेवादौ व्याख्यातम् । तदर्थपर्य्यालोचन-यैव तापनिवृतिमात्रेण पुरुषार्थो न समाप्यत इत्यवधार्य्यते । एवञ्च पुरुषार्थपरिपूरणार्थकतत्त्वज्ञानायावश्यमेव यतितव्यमिति निर्णयोप्याक्षिप्यत एव ।

ततः प्रकृतपुरुषार्थस्य दृष्टोपायाद्यसाध्यतादि प्रदर्शनपूर्व्वकं पञ्चविंशतितत्त्वानां संख्यानादिकं सर्व्वमेव मोक्षसाधनाख्य-मध्याधिकारगमंत्र तत्त्वविद्याविवरणमस्मिन्नेव साङ्ख्यदर्शने समाख्यातम् । यत्तु केचिदथ त्रिविध दुःखेत्यादिकं तदुच्छित्तिः पुरुषार्थ इत्यन्तं कापिलमेव साङ्ख्यदर्शनं समग्रमास्वादन-पराङ्मुखाः विज्ञानभिक्षुपरिकल्पितं मन्यमाना ईश्वरकृष्णकृतां

कारिकामेव साङ्ख्यदर्शनं ब्रुवते हटनिश्चयिनस्तेषामसौ व्यामोहः शास्त्रतथ्याभिनिवेशिभिर्नैवानुसरणीयः । समत्या किल येऽर्थाः-स्तेऽर्थाः कृत्स्नस्य षष्टीतन्त्रस्य । आख्यायिकाविरहिताः परवादविवर्जिताश्चापीत्युपसंहारकारिकादर्शनादेव कारिकायाः संग्रहग्रन्थत्वं तदन्यस्यैव मूलग्रन्थत्वञ्चेति बालकोऽपि न कथं प्रतिपद्येत । तदन्यस्य तु साङ्ख्यदर्शनस्य षष्टीतन्त्रत्वञ्च मयास्मि-न्नेव प्रबन्धे प्रसङ्गेन सूचयिष्यते ।

यत् पुनः षष्टीतन्त्रं नाम कापिलं साङ्ख्यदर्शनं तदेवेद-मुल्लिखितमित्यत्रापि विप्रतिपत्तिर्नावतिष्ठेत ग्रन्थस्यास्य निखिलार्थ-सौसामञ्जस्यगौरवात् संग्रहग्रन्थस्यास्मादेव यथाक्रममगृहीत-सारकत्वाच्च । मया हि सञ्जीवनभाष्यं कुर्व्वता षस्सामेव दर्शनाना-मार्षत्वं समग्रेवान्वभावितराम् । तिष्ठतु तत्तावदप्रतिसंस्कृत-सर्व्वांशकत्वादप्रस्तुतकल्पम् । या मया साङ्ख्याधिकरणमाला पूर्व्वतनवङ्गेश्वरायोपस्थापितापि द्वित्रमासानन्तरं नातिप्रीता प्रतिनिवृत्य स्वस्थानमेवाधिशेते । तस्यामपि प्रचारितायां-मुपवर्णिते कापिलदर्शने कस्यापि विचिकित्सा न स्येयात् । ईश्वरकृष्णेन चैतस्मादेव ग्रन्थात् सारसंग्रहोऽकारीत्येतदपि मया कारिकाव्याख्यानग्रन्थे सुविशदमेव प्रदर्शितमास्ते ।

प्रासङ्गिकवृत्तबाहुल्येनालम् । मूलग्रन्थो वा संग्रहग्रन्थो वाप्युभयमेवैतत् साङ्ख्यशास्त्रम्, वैशेषिके समन्वारब्धस्य मोक्षस्य सांख्ये विधानं यत् प्रस्तुतं तदत्र विद्यत एवातिपरिस्फुटम् । इह हि मध्याधिकारिणाज्ञेयानां सर्व्वेषामेव तत्त्वानां संख्यानं सुनिहितम् ।

येषु ख्यातिनामकं विशेषज्ञानमेव योगानुष्ठानेन साध्यते। तदुपदेशाय पतञ्जलिकृते योगदर्शने तु कतिपयादिमसूत्र-व्याख्यानेन ममालं व्यासभाषेर्ष्यैर्वोद्भासितत्वात्। हन्त भोः! तदप्याप्तभाष्यविरचितदर्शनपञ्चकवदवुरत्पन्नानामपव्याख्याभि-रेवाकुलीकृतं दृश्यतेतराम्, तिष्ठतु तदुपदर्शनातिप्रसङ्गः, शास्त्राभिनिवेशिभिर्मदुपदर्श्यमाने प्रस्तुतार्थे प्रणिधायैव तथ्यमुप-लभ्यतामखिलम्।

इति तुरीयदर्शनार्थसूचकः सप्तमः परिच्छेदः ॥७॥

——:०:——

# अष्टमः परिच्छेदः ।

यथा मोक्षारम्भाय प्रथमाधिकारे पदार्थविद्या वैशेषिकेणोक्ता, यथा च मोक्षसमाप्तये चरमाधिकारे ब्रह्मविद्या वेदान्तेनोक्ता, तथैव मोक्षसाधनाय मध्याधिकारे तत्त्वविद्या सांख्ययोगाभ्यामुभाभ्यामेवोक्ता । सांख्ये हि तत्त्वानि यान्युपदिष्टानि योगेऽपि विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्व्वाणी"त्येवं तान्येव तत्त्वान्युपष्टभ्य साक्षात्कारार्थं प्रणालीविशेषा उपदिष्टा न तु तत्र विद्यान्तरोपन्यासः कथञ्चिदपि दृश्यते शङ्क्यतेऽपि वा । यथा पुनः सांख्ये सत्त्वपुरुषान्यताख्यातिस्तथैव योगेऽपीत्येवमेकस्थानलाभरूपं तत्त्वविद्याफलं परिदृदीप्यते । ततश्च मध्यमाधिकार्य्यस्य तत्त्वज्ञानस्य सामान्यविशेषप्रकारकस्य सांख्ययोगोभयदर्शनसाध्यत्वात्तदेकत्वमपि शास्त्रकृद्भिः परिकल्पितम् । तथा च श्रीमद्भगवद्गीतादौ—"यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते । एकं सांख्यञ्च योगञ्च यः पश्यति स पश्यती"त्येवमुक्तम् ।

एवमपि विशेषज्ञानस्य सामान्यज्ञानपूर्व्वकत्वादस्ति पौर्व्वापर्य्यानुरोधिनी क्रमग्राह्यतैव तयोर्दर्शनयोः । अतएव तुल्यन्तु दर्शनमिति प्रोक्तानवकनवमसूत्रेण षण्णामेव दर्शनानां क्रमवत्त्येव

ग्राह्यता सम्यगवबोधिता। एवञ्च सांख्येन सामान्यतः प्रज्ञापिते तत्त्वविवेके योगेन विशेषज्ञानरूपख्यातिनिष्पादनद्वारैव मोक्षो नियम्यते।

इत्यतो नियमादिति यद्योगस्य विशेषप्रयोजनमुक्तं तदपि सुस्थितमेव। तथापि योगसाध्यो मोक्षनियमः कीदृश इति चेदुच्यते—"प्रसंख्यानेप्यकुसीदस्य सर्व्वथा विवेकख्यातेर्धर्म्ममेघः समाधि"रिति सूत्रादनन्तरस्य "ततः क्लेशकर्म्मनिवृत्ति"रिति सूत्रस्य भाष्येणोक्तं "क्लेशकर्म्मनिवृत्तौ जीवन्नेव विद्वान् विमुक्तो भवति, कस्माद् यस्माद् विपर्य्ययो भवस्य कारणम्, नहि क्षीण-विपर्य्ययः कश्चित् केनापि क्वचिज्जातो दृश्यते" इति।

पुनरनिष्टशङ्कारहितायामेतस्यां जीवन्मुक्तावस्थायां निर्व्वाण-परनामकं कैवल्यमवशिष्यते यदर्थको वेदान्तस्याधिकोपदेशः। जीवन्मुक्तस्यैव ख्यातिवैराग्याधीनकैवल्यपेक्षापि योगेनैवोक्ता। तथा च—"सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्व्वभावाधिष्ठातृत्वं सर्व्वज्ञातृत्वञ्चे"ति सूत्रादनन्तरं "तद्वैराग्यादपि दोषवीजक्षये कैवल्य"मिति योगसूत्रम्। न चास्याद्वैतख्यात्या अर्ज्जन-वर्ज्जनोभयप्रयासापेक्षया वरमसंस्पृश्यापि तां ब्रह्माद्वैतजल्पना-पटुभिर्मायावादिभिर्म्मर्कटवृत्त्यैव कैवल्यपदमारोढुं शक्यमिति वाच्यं द्वैताद्वैतभावनयोरपरिहार्य्यपौर्व्वापर्य्यसद्भावात्। तथा च श्रुतिः—"अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति। किं बहुनोक्तेन—

"मैत्र्यादिचित्त-परिकर्म्मविदो विधाय
क्लेशप्रहाणमिह लब्धसवीजयोगाः।
ख्यातिञ्च सत्त्वपुरुषान्यतयाधिगम्य
वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम् ॥"

इत्येवं प्राचीनाः काव्यक्तोऽपि द्वैतख्यातिं श्रयतामेव तद्वैराग्ये सति ब्रह्मज्ञानाधिकारं वर्णयन्ति स्म। न चानुश्रविकवत् ख्यातेरलाभेऽपि वैराग्यं तेन विनापि ध्यानबलादेव ब्रह्मप्राप्तिश्च स्यादित्यन्यथापि कल्पनीयमस्ति। तत्परं पुरुषख्यातेर्गुण-वैतृष्ण्यमिति परवैराग्यलक्षणेन जातायामेव ख्यातौ तद्वैराग्यस्य "एतस्यैव नान्तरीयकं कैवल्य"मित्यन्तेन तद्भाष्येण तद्वैराग्या-देव कैवल्यस्य च सम्भवख्यापनात्। अहो! ब्रह्मविदामृषीणामपि बहव एवानियतकालं परवैराग्यापेक्षया दमितान्धपरम्पराः परमिह विराजन्ते, न तु ब्रह्मतां विशन्ति। हा! हन्त यस्यैव कालस्य महिम्नेदानीं द्वैतख्यातिं तद्वैराग्यञ्च किञ्चिदपि विनैव कैवल्याधिकारिता गणतन्त्वनीत्यापि जनेषु प्रायशः प्रवृत्ता, "सर्व्वं ब्रह्म वदिष्यन्ती"ति तस्यैव लक्षणं शास्त्रकृद्भिरेवोक्तम्। शास्त्रसिद्धान्तास्तु नैतावताप्यन्यथा करणीयाः स्युः, सुतरां यथा-शास्त्रमेव प्रस्तुतमभिधीयते मया सुधीभिरनुभूयताम्।

इति पञ्चमदर्शनार्थसूचकोऽष्टमः परिच्छेदः ॥८॥

———०———

## नवमः परिच्छेदः ।

अस्यैव विवेकख्यातिमतो योगिनो "ननु क्लेशकर्म्मनिवृत्तावपीत्थं दर्शनदृश्यद्रष्टृव्यापारनैरन्तर्य्ये कथं नाम कैवल्यमुपतिष्ठता"मित्याकाङ्क्षायाम् "अथातो ब्रह्मजिज्ञासे"ति वेदान्तस्यादिमं सूत्रम् । अथ परवैराग्याधिकारे, अतः कैवल्यात् प्रयोजनाद् ब्रह्मणि विषये जिज्ञासा भवति । एवञ्च जिज्ञासिते ब्रह्मणि ज्ञाते कैवल्यनिष्पत्तिः स्यादिति निर्णयः ।

ननु जिज्ञास्यं ब्रह्म कीदृशमिति प्रश्ने "जन्माद्यस्य यत" इति द्वितीयसूत्रम् । अस्य विसृष्टस्य जगतो जन्मादि प्रसिद्धं षड़्विकारं यतो यस्मादुपादानात् सम्पद्यते, तद् ब्रह्मेति वाक्यमाकाङ्क्षितं प्रस्तुतत्वात् स्फुटमवगम्यतितराम् । एवञ्च तस्मिन् ज्ञाते विसृष्टप्रतिसर्गादद्वैतोपपत्त्या कैवल्यनिष्पत्तिः स्यादिति निर्णयः ।

ननु सृष्टविसृष्टयोरुभयोरेव जगतोः प्राकृतवैकृतभावेन गुणा एवोपादानान्युपलभ्यन्ते, तथापि विसृष्टस्य तदन्यत् कारणं किमर्थमभ्युपगन्तव्यमिति प्रश्नस्योत्तराय "शास्त्रयोनित्वा"दिति तृतीयसूत्रम् । अस्ति विसृष्टकारणं ब्रह्म शास्त्रस्य योनिः

शास्त्रयोनित्वात्शास्त्रत्वाद् ब्रह्मणोऽनुमानेन सिद्धिः। एवञ्च विसृष्टविशेषेण शास्त्रेण लिङ्गेनानुमितस्य ब्रह्मण एव सर्व्व-विसृष्टकारणत्वमध्यवसितव्यमिति निर्णयः।

ननु ब्रह्मण एव शास्त्रयोनित्वमित्यनवधारिते कथमनेन साध्यसमेन लिङ्गेन ब्रह्मणः सिद्धिः स्यादिति प्रश्नस्योत्तराय "तत्तु समन्वया"दिति तुरीयसूत्रम्। तुशब्दोऽत्र प्रक्रान्त-व्यवच्छेदकोऽर्थादत्र सूत्रे समन्वयादिति हेतुना प्रक्रान्तं ब्रह्म नहि साधनीयं किन्तु सन्निहितं तत्साधकं शास्त्रयोनित्वमेव साध्यते। तदनन्तरोक्तं शास्त्रयोनित्वं ब्रह्मण एव लिङ्गं समन्वयात्। सम्यगन्वयः समन्वयः केवलान्वयव्याहत्त इत्यर्थः। एवञ्च शास्त्रयोनित्वस्य लिङ्गस्य पुंप्रधानाभ्यां व्यतिरेकेण ब्रह्मणि समन्वितस्य साध्यसमताशङ्का निरस्तै-वेति निर्णयः।

इत्थं ब्रह्मणोऽनुमाने वेदान्ताधिकारिणां सर्व्वज्ञानामेतावतैव सद्यः स्मृतिरुदेष्यतीति सूत्रकृतो नातः परिस्फुटं वक्तव्यमस्ति। ये पुनः शास्त्रमात्राधिकारिणस्तेषामपि दृष्टदर्शनान्तरादि शास्त्राणां गवेषणयैव सूत्रकृद्विवक्षितार्थोपपत्तिरनुभवनीया स्यात्। किन्तु हन्तेदानीं तानि शास्त्राणि प्रायशो नानाप-व्याख्याननिविड़निचितान्येव दृश्यन्ते, यान्यधीयानैः शास्त्रम्म-मानिभिरन्धपरम्परैव दृढ़ीक्रियतेतराम्। सुतरामिह निज-व्याख्यानवैधुर्य्यशङ्कानिरासार्थमपि मया कथञ्चिद् वाग्बाहुल्य-मेवाङ्गीक्रियते।

ब्रह्मणि शास्त्रस्य समन्वयं बुभुत्सुना शास्त्रमेवादौ परिचेतव्यम्, तदिह वेदादिकं चतुर्म्मुखादिभिराप्तैः परिकल्पितमिति नैव मन्तव्यं "न कश्चिद्वेदकर्त्तास्ति वेदस्मर्त्ता चतुर्म्मुखः । तथैव धर्म्मं स्मरति मनुः कल्पान्तरान्तरे ॥" इत्येवं विष्णुपुराणपराशरसंहितादौ विशदीकृत्याभिधानात् । किन्तु "यो ब्रह्मणे वेदमदा"दित्येवं श्रुतिवाक्येभ्य ईश्वरेण ब्रह्मणे दत्तस्य शास्त्रस्य तत्पूर्व्वसिद्धत्वमेव बोद्धव्यं तथापीश्वरेणैव परिकल्प्य दत्तमित्यपि न वक्तव्यम् "अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् । दुदोह यज्ञसिद्ध्यर्थमृग्-यजुः-सामलक्षण"मिति मनूक्तावीश्वरेण शास्त्रस्य दोहनोल्लेखात् प्राक् सिद्धत्वमेवावधार्य्यते । बुद्धिपूर्व्वा वाक्यकृतिर्व्वेदे ॥१॥ ब्राह्मणे संज्ञाकर्म्मसिद्धि लिङ्गम् ॥२॥ बुद्धिपूर्व्वो ददाति ॥३॥ तथा प्रतिग्रहः ॥४॥ चतुर्भिरमीभिर्व्वैशेषिकसूत्रैरप्येतत्सर्व्वं सम्यगेवाववोधितम्, साङ्ख्येऽपि बहुधैव विचारितम् । तर्हीदं शास्त्रं नित्यमिति च न वक्तव्यं महाप्रलयसद्भावादतएव सांख्यादावस्य सिद्धरूपत्वमेवाख्यातमिहापि शास्त्रादस्याखिलविसृष्टस्यैव जन्मादिसाधकत्वं ब्रह्मणो लक्षणमुक्तम् । इत्थं प्राप्तपरिचयस्य शास्त्रस्य ब्रह्मणि समन्वयोऽप्यभिज्ञाप्यते ।

प्रथमं तावत् सर्व्वमेव दृश्यं द्रष्टृदर्शनाभ्यां पृथगेवेत्यवधेयम् । शास्त्रं हि वाह्यान्तर-वस्त्वन्तरवद् बुद्धिसत्त्वे प्रतिविम्बभावेनोपस्थितं द्रष्टुर्दृश्यतां यातीत्यनुभवसाक्षिकमेव । तथापि शास्त्रबिम्बं द्रष्टुरेव धर्म्मान्तरं स्यादिति न वाच्यं "द्रष्टा दृशिमात्रः

शुद्धोऽपि प्रत्ययानुपश्यः । इत्येवं कृतलक्षणकस्य द्रष्टुश्चिन्मात्रतया निर्धर्म्मकत्वात् । द्रष्टुः स्वरूपमेव तदास्तामित्यपि न वक्तव्यं द्रष्टृस्वरूपस्य दृश्यतानुपपत्तेस्तथा च विज्ञातारमरे केन विजानीयादिति व्यासभाष्योक्तम् ।

अथ "द्रष्टृदृश्ययोः संयोगो हेयहेतुः" इत्यस्य भाष्ये द्रष्टा बुद्धेः प्रतिसंवेदी पुरुषो दृश्या बुद्धिसत्त्वोपारूढ़ाः सर्व्वे धर्म्मा इत्युक्तेः शास्त्रस्य सत्त्वधर्म्मत्वमेवास्तीति चेदहो भ्रान्तिरीदृक् सत्त्वधर्म्मत्वं वहिरवस्थितानां घटपटादीनामपि स्यादेव । मनोवृत्त्या हि बुद्धिसत्त्वे प्रतिविम्बभावेनैवोपस्थाप्यते सर्व्वमेव प्रमेयं ततो दृश्यतया दर्शनस्य धर्म्मतां याति दर्पणस्य मुखादिवत्, कथमेतावतैव घटादिकं बुद्धिसत्त्वस्य मुखादिकं दर्पणस्येत्यादि प्रलपितव्यं स्यात् । अपि तूक्तव्याख्यायामेव यद्—"दृश्या बुद्धिसत्त्वस्य धर्म्मा इत्यनभिधाय बुद्धिसत्त्वोपारूढ़ा धर्म्मा इत्यभिहितम्, तत्रैव प्रणिधाय यत्र क्वचनावस्थितानां वस्तुविम्बानां प्रतिविम्बान्येव मनोद्वारा बुद्धिदर्शनमारुह्य द्रष्टुर्दृश्यतां यान्तीत्यध्यवसातव्यमेव ।

अथ यथा सुखलवुत्वादिकस्य विम्बमपि सत्त्वे प्रतिष्ठितं शास्त्रस्यापि तथैव स्यादित्यपि नावधारणीयम्, सुखादितुल्यत्वे हि शास्त्रस्य सदा सर्व्वप्रमातृग्राह्यत्वमेवाभविष्यन्न तु तदस्तीत्यत एव वैशेषिके "व्यवस्थातो नाने"ति जीवनानात्वे साध्यमाने "शास्त्रसामर्थ्या"च्चेति जन्ममरणादिवद् व्यवस्थान्तरमुदाहृतम् । जीवनानात्वस्यानित्यत्वादशुद्धिश्चये शास्त्रसामर्थ्यमुदेष्यतीत्यत

एतस्य क्वचिदभावः शास्त्रस्य सत्त्वधर्म्मत्वं न व्यपोहतीति चेत्तर्हि चतुर्म्मुखस्य शुद्धे सत्त्वे शास्त्राभावात्ततोऽपि शास्त्रप्रेरणा-प्रयासः किमर्थमीश्वरेणाप्यकारितराम्। सुतरां शास्त्रस्य सुखादिवत् सत्त्वधर्म्मत्वं कथमपि नैव समर्थनीयं स्यात्। यत्तु व्यासभाष्ये "एतयोः शास्त्रोत्कर्षयोरीश्वरसत्त्वे वर्त्तमानयोरनादिः सम्बन्ध" इत्युक्तं तत्रापीश्वरस्य द्रष्टृत्वे नैव शास्त्रं सदा विद्यमानमवगन्तव्यम्। अन्यथा यदि शास्त्रस्य विम्ब-मपीश्वरसत्त्वे नियतमस्थास्यत्तदा चतुर्म्मुखाय दानार्थं कथ-मग्निवायुरविभ्यस्तद्दोहनञ्च समभविष्यत्। एवञ्च स्वोपादानाव-स्थितं शास्त्रं निरतिशयसूक्ष्मत्वादीश्वरेणैव गृह्यमानं तेनैवाग्नि-वायुरविभ्यः समुत्थाप्य प्रथमशरीरिणश्चतुर्म्मुखस्य ग्रहणार्ह-मकारि, ततः पुनश्चतुर्म्मुखेनान्येषां ग्रहणाय वाङ्मयं विरचय्योपदिष्टं मन्वादिभिरार्षैरपि क्रमशस्तथैव बहुधाकृत-मित्येतदेव शास्त्रतत्त्वं निर्णीय द्रष्टृदर्शनव्यतिरिक्ततया विसर्ग-कारणे ब्रह्मण्येव तत्समन्वेतीत्यत्रोक्तं ब्रह्मणोऽनुमानं सुधीभि-रनुभूयताम्।

अतः परं "नन्वित्थं शास्त्रस्यान्यथानुपपत्त्या प्रकृतिपुरुषाति-रिक्तं तस्य कारणं किञ्चिदस्तीति सामान्यतोऽवधार्य्यते, किन्तु तदेव विसर्गकारणं ब्रह्मेति कथमशब्दमपि विशेषतोऽव-धारयितुं शक्य"मिति प्रश्नस्योत्तराय "ईक्षतेर्नाशब्द"मिति पञ्चमसूत्रम्। विसर्गकारणभावेन प्रस्तुतं ब्रह्म ना शब्दं न शब्दप्रमाणरहितमीक्षतेः स ऐक्षत बहुस्यामित्यादिश्रुतेः।

एवञ्च ब्रह्मणो बहुभवनरूपस्य विसर्गस्य श्रुत्या विशेषेणाभि-
हितत्त्वात् प्रस्तुतं ब्रह्मसम्यगेव निरूपितमिति निर्णयः ।
इत्थमेव पञ्चविंशतितत्त्वातिरिक्तस्याद्वैतब्रह्मतत्त्वस्योपदेशाद्
वेदान्तस्याधिकोपदेशादिति यद् विशेषप्रयोजनमुक्तं तदपि
सुस्थितमेव ।

इत्यन्तिमदर्शनार्थसूचको नवमः परिच्छेदः ॥९॥

——०——

## दशमः परिच्छेदः।

यथा न्यायदर्शने निःश्रेयसे प्रमेये तदङ्गतया बहव एवात्मादयः प्रमेयाः प्रोक्ताः प्राक् प्रदर्शितास्तथैवात्रापि विसर्गे बोद्धव्ये तदङ्गतया प्राकृत-सर्ग-वैकृत-सर्ग-निसर्ग-संसर्ग-प्रतिसर्गाश्च बोद्धव्याः। तदेतत् सर्व्वं दर्शनेषु पुराणादिषु च बहुश एकख्यातमपि कुव्याख्यासमाच्छादितत्वादाधुनिकानां प्रायशो ज्ञानवहिर्भूतमेवास्ते। अतो निजव्याख्यारचणाय मयैवाद्यवक्तव्यमपि प्रवक्तुमशक्यमेव, तस्य हि सम्यगाख्यापने विसर्गविवरणनाम्ना वृहता प्रबन्धेनैव भवितव्यत्वात्। श्रीमद्भगवद्गीतायान्तु तत्सर्व्वं संक्षेपेणोक्तमेवास्ते, हा हन्त! सापि कालमहिमानं नातिक्रामति। अहो! तस्यां किल "तस्माद् युध्यस्व भारत!" इत्येवमेव वाक्यकदम्बकमुच्चित्य तत्सारं मन्यमानाः कति नाम पाषण्डा अपि तां नाद्रियन्ते। स्वरुचिमनुवर्त्तमानैरनेकैरेवाधुनिकैः कियत्यो वा तद्व्याख्याः क्रमशो नावतार्य्यन्ते, अहो! तासु क्वापि गृहीतविवक्षितार्था नैव वीक्षिता मया। तथापि विविधजनजेगीयमानाया गीताया एव किञ्चिदाकृष्य मद्वक्तव्यमेव संक्षिप्ततमसुपनिबध्यते।

"अक्षरं परमं ब्रह्म स्वभावोऽध्यात्ममुच्यते। भूतभावोद्भवकरो विसर्गः कर्म्मसंज्ञितः॥" इत्येष विसर्गो जीवभावजनको

निर्द्दिष्टः । कर्म्मसंज्ञाप्यस्य तत्रैव विवृता "ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्म्मचोदना । करणं कर्म्मकर्त्तेति त्रिविधः कर्म्मसंग्रहः" ॥ इति । बहुस्यामिति श्रुत्या ब्रह्मणो द्रष्टृनानात्वमात्रस्योक्तावपि दृश्यदर्शननानात्वनिरपेक्षस्य तस्यानुपपत्तेरङ्गाङ्गिभूतस्य तच्चितयस्यैव बहुभावे श्रुतेस्तात्पर्य्यमवलम्ब्यैवात्रावान्तरभेदैस्त्रिधैव कर्म्मारम्भः कथितः । तथापि परिच्छेदैर्विना बहुभवनस्याप्रसङ्गाद् बुद्ध्यादिदेहान्तवैकृतसर्गोऽपि विसर्गाङ्गभावेनैवारभ्यते प्रधानेन परार्थसृष्टिप्रवणेन तदुपक्रमोऽपि भगवतैवोक्तः "सर्व्वयोनिषु कौन्तेय ! मूर्त्तयः सम्भवन्ति याः । तासां ब्रह्ममहद्योनिरहं बीजप्रदः पिता ॥" इति ममयोनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहमिति चान्यत्र तत्रैव । तथैवास्य विसृष्टस्य जगतः परापराख्ये द्वे प्रकृती अपि वर्णिते द्रष्टव्ये । अनयोरेव क्षेत्रिक्षेत्रभूतयोः संयोगो निमित्तकारणमुक्तं यथा— "यावत् सञ्जायते किञ्चित् सत्त्वं स्थावरजङ्गमम् । क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ! ॥" इति । संयोगस्तु भुक्तिमुक्तिरूपप्रयोजनद्वयाधीनस्तदुभयसमाप्तौ नैमित्तिकेन सहैव निवर्त्तते । एष एव प्रतिसर्ग आत्यन्तिकप्रलय इत्याख्यायते पुनरुदयाभावात् । प्राकृतसर्गस्य तु महाप्रलयःपुनरुदयस्य निरवसान एव नैसर्गिकाङ्गभावादतएव विविदिषु मर्ज्जनं प्रति "प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपीत्या"दिभगवदुक्तिः । प्राकृतप्रलयस्य निसर्गनियमिते काले प्रकृतितो विकृतेरनतिरिक्ततया यथोक्तानि स्थावरजङ्गमान्यपि तावन्निलीयन्ते नतूच्छिद्यन्ते

तदुच्छेदस्य प्रयोजनोच्छेदापेक्षत्वात् प्रयोजनसमाप्तौ पुनः प्राकृतप्रलयनिरपेक्षमेवात्यन्तं प्रलीयन्ते। प्रयोजनद्वयस्य प्रत्यात्मभिन्नत्वाद् यस्य यदा तत्समाप्तिस्तस्यैव तदा चिरनिवृत्तिर्न पुनरसमाप्तप्रयोजनानामितरेषामतएव पातञ्जले दृश्यवर्णनायामुक्तं कृतार्थं प्रतिनष्टमप्यनष्टं तदन्यसाधारणत्वादिति।

एवञ्च जीवजगतां कथञ्चिदपि कालनियमो नास्तीति वाढ़मध्यवसातव्यम्। अन्यथा "उद्धरेदात्मनात्मानं नात्मानमवसादयेत्। आत्मैव ह्यात्मनो वन्धुरात्मैव रिपुरात्मन" इति भगवदुपदेशस्यानर्थक्यापत्तिरपि दुर्निवारा स्यात्। प्रथमप्रयोजनसाधकं विसृष्टाङ्गतया वैकृतादेवोत्पन्नमेकादशधेन्द्रियम्, अतिचाञ्चल्यात् स्वयम्प्रवृत्तमेव सुखलालसया पुरुषं समाकृष्य विविधदुःखपरम्परासु निपातयतीत्ये तदेवास्य परमो रिपुः। चरमप्रयोजनसाधकं मूलविसृष्टं शास्त्रन्तु निश्चलतया समासादितमेव त्यागमार्गेण दुःखखनितस्तमुद्धरतीत्ये तदेवास्य परमो बन्धुः। तथाच यस्तदुभयं परिज्ञाय तयोर्हेयत्वोपादेयत्वे च निश्चित्य सावधानश्चरति स स्वयमेवात्मनो वन्धुः। यश्च परमशत्रोरपि दासीभूय परमबन्धुमपि विद्वेष्टि स स्वयमेवात्मनो रिपुरिति भगवद्वाक्यतात्पर्य्यं सुधियां सुगममेव। एते किलात्मबन्धुत्वात्मरिपुत्वे द्वे एव कालदेशपात्रभेदेषु व्यस्तसमस्तेषु यथायोगं वृद्धितारतम्यमुपगच्छतः। आत्मवन्धूदाहरणानि सत्ययुगादिलभ्यत्वाद्विरलान्येवेदानीमात्मरिपूदाहरणानि त्वधुना सर्व्वंसहामपि दुःसहभारां कुर्व्वतेतराम्। सुतरां दुष्कालप्रेरिते-

रेवाबुरत्यन्तैर्दुरभिसन्धिपरैश्च निगूहितं यथोक्तमखिलं शास्त्रं कुव्याख्यावरणादुन्मोच्य समालोच्यतां शास्त्राधिकारिभिः । वेदान्तादेव सूत्रनवकमिहोपस्थाप्य तदुक्तिभिः सह षसामेव दर्शनानां यत् सौसामञ्जस्यमनुस्यूतं सामान्यतो विशेषश्चो-पदर्शितं मया, तत्र तेषां विदुषां पुनः सन्देहस्यावकाशो नैव भविता । ब्रह्मलिङ्गे विसर्गे त्वश्रुतपूर्व्वत्वात् सन्देह-सम्भवेपि बहुभावसैरश्चतिश्रु तिबोधितस्य विसर्गानन्यत्वान्निःसन्देहेनैव भवितव्यम् । तथापि श्रीमद्भगवद्गीतातो विसर्गः स्वनाम्नैव कथितः सविवरण एवोपस्थापितो मया । अतः परमप्येन-मेवोपक्रम्य परिच्छेदान्तरमेवोच्यते सामञ्जस्य-दृढ़ीकरणाय ।

इति विसर्गप्रदर्शनाख्यो दशमः परिच्छेदः ॥१०॥

——०——

# एकादशः परिच्छेदः ।

यदेव स्थावरजङ्गमात्मकं क्षेत्रादिमयं विसृष्टं जगत् संक्षेपेण गीतायामुक्तं तदेव वेदान्तदर्शनस्यापि प्रतिपाद्यमिति च तत्रैवोक्तं यथा "यत् क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् । स च यो यत्प्रभावश्च तत् समासेन मे शृणु ।। ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् । ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितै"रिति त्रयोदशाध्यायस्य तुरीयपञ्चमश्लोकौ । इह हि यत्क्षेत्रमित्यादि तत्समासेनेत्यन्तं यत्किञ्चिद् वक्ष्यमाणमुपक्रम्य तदृषिभिः सर्व्वैर्वेदैर्वेदान्तसूत्रैश्च बहुधा गीतमिति तस्यैव परमोपादेयता भगवता कीर्त्तिता । अहो यदेव समग्रं विश्वरूपं योगवलेनार्ज्जुनाय साक्षाद्दर्शयन् विसर्गादिविवरणपूर्व्वकञ्चोपदिशंस्तदेव ब्रह्मसूत्रपदैर्गीतमिति भगवानेव स्वयं विज्ञापयामास, विज्ञापनञ्च तां ब्रह्मसूत्रकर्त्तैव स्वरचिते महाभारते स्वयं प्रकाशयामास । हा हन्त ! तथापि किं वेदान्तसूत्रप्रतिपाद्ये विषये शास्त्राधिकारिणामपि वितर्कः सम्भविता । सुतरामिदानीं गीतामेव ब्रह्मसूत्रस्य विवक्षावोधिनीं व्याख्यां निश्चित्य पञ्चमसूत्रे पुनरप्रस्तुतं श्रुत पदानुपस्थाप्यत्वं किञ्चिदपि खण्डनीयतया नावतारणीयम् ।

इह हि शास्त्रलिङ्गेन साधितं ब्रह्म विसर्गकारणबोधिन्या श्रुत्या प्रसाधनीयमेव। प्रस्तुतेऽस्मिन्नप्राप्त-समाप्ताविव कथं कारणान्तरखण्डनस्य प्रस्तावना सम्भावनीया स्यात्। अथ परपक्षखण्डनभङ्ग्यैव स्वपक्षोऽपि प्रसिध्यतीति चेदहो दुर्व्विजिगीषावैदग्ध्यम्। स्वमते हि परं प्रसाधिते सम्भवतां तद्विरुद्धानामनुल्लेखेऽपि निरासः स्यादितीयं सुखावसानाशिष्टप्रणाली, तद्विपरीता तु दुरवसानैव दुष्टप्रणाली। एतयोरन्तिमैव यया प्रवर्त्तिता स्यात् सैषापि दुर्व्विजिगीषा व्यासस्य दुर्व्विवक्षां शङ्करस्य वा दुर्व्याख्यामवतारयदित्येवं स्वप्नेऽपि शास्त्राधिकारिभिरचिन्तनीयमेव।

तथा दुर्व्विजिगीषोः प्रच्छन्नविज्ञानवादिनः शारीरकभाष्यकृतो यत् खण्डनीयतयाभिप्रेतं तदिह श्रुतेनाशब्दमितिपदेन कथमप्युपस्थापयितुं न शक्यते। तथाहि संयोगलक्षणीययोगभाष्ये "प्रधानस्यात्मख्यापनार्था प्रवृत्तिरितिश्रुते"रित्येवं शब्दितमेव प्रधानं स्वयमेवाख्यायापि सूत्रकृता कथमशब्दमित्यनेनात्र पुनस्तत् परामष्टुं शक्यताम्? सुतरां प्रधानस्य विवक्षायां सुप्रसिद्धेन स्वशब्देनैव तदाख्यानमभविष्यत्। तदिह ह्रिष्टत्वादेवानुच्चार्य्यमिति चेदहो सत्यमेवैतद् व्याख्यातुरेव ह्रिष्टं न तु सूत्रकृत "आनन्दादयः प्रधानस्ये"ति वक्ष्यमाणसूत्रसद्भावात्। अथ तत्र प्रधानपदेन ब्रह्मैवाभिहितमिति चेदहो वाग्विड़म्बना। यदेव पदं ह्रिष्टं तेनैवानभिधेयस्याप्यभीष्टार्थस्याभिधानम्। इत्थमजिघृक्षित-पदमपि शिरोधार्य्यं कारयन्

दुरभिसन्धिरेवास्यधिकाकरणीयः किन्तु निराकृतस्य द्विष्टस्य नामशेषत्वमप्यसहिष्णुना नामापि तस्याच्छिद्य तथा स्वीकुर्व्वता साधितो विजयः पुनरस्याभिनन्द्यतेतराम्। अनेन ह्यानन्दादयः प्रधानस्येत्यत्र सत्त्वधर्म्ममेवानन्दं ब्रह्मणः स्कन्धे समारोप्य प्रकृत-ब्रह्मापलापेन "विज्ञानघन एवानन्दमय" इति श्रुति प्रतिबोधितं विज्ञानं ब्रह्मैव वेदान्तप्रतिपाद्यतया प्रतिष्ठापितम्। तदर्थमेवादित एव ब्रह्मैकजन्यमखिलमिदं जगन्मायामयं मिथ्यैवातो विज्ञानातिरिक्तं किञ्चिदपि नास्तीति व्यवस्थापयितुं कारणान्तर-निरासः प्रकटितः। स पुनः शाङ्करीयमिति बहुधा प्रख्याप्य दृढ़ीकृतः। तदनुसारिभिः पञ्चदशी वेदान्तपरिभाषादि-विविधग्रन्थकृद्भिर्दृढ़तरीकृतस्तत्तत्प्रीतिमद्भिराधुनिकैरप्यनेकैर्ग्रन्थ-व्याख्यानादि-पण्डितकर्म्मनिपुणैर्दृढ़तमीक्रियतेतमाम्। सुतरां तैः सह मम तृणादपितुच्छस्य प्रतिद्वन्द्विता कथमपि न सम्भवेत्। तैः परमुपहस्येहमिति च ध्रुवमेव जाने। तथापि नानाप-व्याख्यानव्याकुलितधियां शास्त्रतथ्यमनुसन्धित्सूनां तदनास्था-परिहाराय मया यस्मादेवान्तिमदर्शनात् सूत्रनवकमुपस्थाप्य कैवल्यशास्त्रसामञ्जस्यं प्रदर्श्यते, तस्यैव विवक्षितार्थं समाच्छाद्य विराजमानं शारीरकभाष्यमनुपमृद्य प्रतिपित्सित-प्रकाशन-स्याशक्यत्वादेव तस्यैव मर्म्मोद्घाटनपूर्व्वकं मायावादानतिरिक्तः कारणैकतावादः प्रत्याख्यायते मया संक्षेपेणैव।

सन्ति हि कारणानामारम्भ-परिणाम-विवर्त्ताख्यास्तिस्रः कक्षास्तासु व्यतिभिन्नासु निष्प्रतीकमवस्थितानामणुप्रकृति-

ब्रह्मणः कार्य्याणि संहतसृष्टविसृष्टानि त्रिधा स्थूलसूक्ष्माध्यस्तानि जगन्ति सम्पद्यन्ते । तासु कक्षासु यथाधिकारं प्रविशता योगिना सर्व्वाख्येव कारणानि यथायथमनुभवनीयानि । तस्मादेतेषु हानोपादाने कथमपि न सम्भवतः । तथापि "ननु कैवल्यप्रदे ब्रह्मणि जगत्कारणे बोद्धव्ये प्रकृतेर्जगत् कारणताङ्गीकारेणाल"मिति प्रश्नस्योत्तरार्थं "मधिकारि त्रैविध्यान्न नियम" इति साङ्ख्यसूत्रम् । ब्रह्मापि जगत्कारणमस्ति सत्यं किन्तु ब्रह्मैव जगत्कारणमिति नियमो न स्यादधिकारिणां त्रैविध्यात् । एवञ्च विवेकख्यातेः प्राग् ब्रह्मकारणकं जगदधिगन्तुमनर्हमेवेति निर्णयः । तदेतन्मयाष्टमपरिच्छेदे सम्यगेव विवृतम् । ब्रह्मवादाधिकारिणामपि सर्व्वजगत्कारणं ब्रह्मेति कारणैकतावादो नावतिष्ठते । तथाच योगवाशिष्ठे स्फुटमेवोच्यते, यथा—

"उपादानं त्रिधाभिन्नं विवर्त्ति, परिणामि च ।
आरम्भकञ्च तत्रान्त्यौ न निरंशेऽवकाशिनाविति ॥"

विवर्त्त्युपादानं ब्रह्म, परिणाम्युपादानं प्रकृतिः, आरम्भकमुपादानमणुः, तत्र विवर्त्तपरिणामारम्भेष्वन्त्यावारम्भपरिणामौ निरंशे ब्रह्मणि विवर्त्तिन्येवावकाशं न लभेते । अर्थान्निरंशस्य विवर्त्तिकारणस्यारम्भपरिणामानुपयोगात् सर्व्वेषां जगतां ब्रह्मैककारणता नोपपद्यत इति । विवर्त्तः खल्वतत्त्वतोऽन्यथा प्रथेति प्रसिद्धः स एव गीतायामुक्तो विसर्गः स एवाध्यास इति यावत् । ततश्च सर्व्वेषां जगतामध्यस्तत्वे सत्यवस्तुत्वमापद्यते । न-

चेष्टापत्तिरवाधाददुष्टकारणजन्यत्वाच्च नावस्तुत्वमिति साङ्ख्ये तन्निराकृतं, तथापीष्टापत्तिस्तु नैवोपपद्येताध्यासस्यैवानुपपत्ते स्तथाच तत्वैवव्याख्यायि "प्रकृतिवास्तवे च पुरुषस्याध्याससिद्धि-रिति। चिन्मयस्य यत् कर्त्तृत्वभोक्तृत्वादिकमध्यस्तमसति-तद्धर्म्मके जड़े कथं नाम तत् सिध्येत्। रज्जौ हि सर्पत्वं सर्पे वा रज्जुत्वमध्यस्यते न तु खलतात्वमवस्तुकत्वात्। सुतरां काष्ठमयस्य पत्रित्ववद् गुणमयस्याप्यहन्ताममतादेरेव मायिकं बोध्यं। किं बहुनोक्तेन "दैवी ह्येषा गुणमयी मम माया दुरत्यये"ति भगवदुक्तिश्चानुचिन्त्य शिष्टसिद्धान्तविरुद्धा निर्वस्तुका-मायानाङ्गीकर्त्तुं शक्या। अहो विज्ञानमात्रं जानानोपि हटाभ्यस्तुसमाधिस्तस्मिन्नेव तुरीये कोषे मुहुर्निमज्य वैदेह्यं भजन् यदा शान्तिकामो विज्ञानात् प्रविभक्तं विज्ञानदर्शिन-मुपलप्स्यते, तदा सोपि जीवन्मुक्त एव विसृष्टमात्रं जगद्-ब्रह्म सम्भूतमनुभूय तदात्यन्तिकप्रलयात् कैवल्यं प्राप्स्यादयनस्य पथ्यन्तराभावात्। न केवलमसावन्येपि वौद्धा वा जैना वा शैववैष्णवप्रभृतयो वा खृष्टयवनादयो वा सर्व्वे एव मानवाः समुपजाते संसारवैराग्ये कैवल्यशास्त्रमेवाश्रित्य विवेकस्य क्रमोन्नत्या प्राप्तचरमदेहाः शान्तिं लप्स्यन्ते, ये चान्ये कर्म्मानधिकारिणो जीवास्तेषामपि तथैवमेकदा सैवावस्था समुदेष्यति प्रधानसृष्टेरपवर्गशेषत्वादित्यमेव निवृत्तिधर्म्मैः सर्व्वेषामेव प्रवृत्तिधर्म्माणां समन्वयोप्यवधार्य्यता-मिति दिक्। सर्व्वेषां जगतां विवरणानीह बाहुल्यभयान्मया

नोल्लिखितानि, तथाप्यत्र विवरणीयन्तु विसृष्टं जगद्गीतातः समुदाहृतमेव। तत्रैव त्रिविधकर्म्मसंग्रह इत्युक्तौ स्तदतिरिक्तं विसृष्टं जगन्नास्तीति निश्चेतव्यम्। संग्रहो हि यावत् सम्भवानामेकधर्म्माणां समासेन ग्रहणं यथा खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रह इत्येवमादौ नवधैव समस्तं द्रव्यमवगन्तव्यं तथैवात्रापि दर्शनदृश्यद्रष्टृरूपं त्रिविधमेव समस्तं विसृष्टमित्यसंशयमेव। योगदर्शने "प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्य"मिति दृश्यस्य लक्षणसूत्रम्। प्रकाशशीलं सत्त्वं क्रियाशीलं रजः स्थितिशीलं तम इतीते गुणाः पुरुषार्थं कर्त्तव्यतया प्रयुक्त सामर्थ्याः प्रधानशब्दवाच्या भवन्ति। तदेतद्दृश्यं भूतेन्द्रियात्मकमित्यादि कियदुद्धृतं तद्भाष्यम्। दृश्यानाञ्च गुणानां स्वरूपभेदावधारणार्थं "विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्व्वाणी"ति तदनन्तरसूत्रमप्यस्ति। एवमेतादृशे दृश्ये दृश्यधर्म्मकस्य दर्शनस्य जड़त्वैक्येनान्तर्भावादस्य लक्षणसूत्रं न कृतम्। दृग्दर्शनशक्त्योरेकात्मतेवास्मितेति सूत्रे दृक्शक्तिः पुरुषो दर्शनशक्तिर्बुद्धिरिति तस्य भाष्ये च केवलदर्शनस्योल्लेखो विद्यत एव। द्रष्टृलक्षणन्तु मया शास्त्रसमन्वयप्रसङ्गेन समुद्धृतम्। योगाधिकारे विवेक्तव्ययोः स्वस्वामिभावापन्नयोर्गुणचितोः प्रधानपुरुषसंज्ञाप्रसिद्धावपि तयोः संयोगस्य दृश्यत्वद्रष्टृत्वद्वारैव दुःखहेतुत्वमाख्याय तौ दृश्यद्रष्टृसंज्ञाभ्यामुल्लिखितौ। तथा तदध्यासनिवृत्ताविव दुःखात्यन्तनिवृत्तिः स्यादिति च ज्ञापयितुमेव

"तदर्थ एव दृश्यस्यात्मे"ति सूत्रमभिहितम्। "दृशिरूपस्य पुरुषस्य कर्म्मविषयतामापन्नं दृश्यमिति तदर्थ एव दृश्यस्यात्मा-स्वरूपं भवतीत्यर्थः। तत्स्वरूपन्तु पररूपेण प्रतिलब्धात्मकं भोगापवर्गार्थतायां कृतायां पुरुषेण न दृश्यत इति स्वरूपहानादस्य नाशः प्राप्तो न तु विनश्यति"इति तद्भाष्ये च विशदीकृत्य कथितम्। पररूपेणेति भाष्यांशस्य ब्रह्मरूपेणेति विवक्षितार्थ-मभिनिविश्य विपरीतार्था व्याख्या तथ्यजिज्ञासुभिः परिहातव्येति दिक्। साङ्ख्येऽपि महदादि-योगमात्रां प्रधानस्य सृष्टि-माख्यायोक्तम् "आत्मार्थत्वात् सृष्टेर्नैषामात्मार्थ आरम्भ" इति। महदादीनां सृष्टेर्योगरूपाया यथोक्तनिमित्तसमाप्तौ निवृत्तिः स्यादेषामारम्भस्य निर्निमित्तकत्वादुच्छेदस्य प्रसङ्गोऽपि नास्तीति स्फुटमधिकरणस्य पञ्चमाङ्गमुपलब्धम्।

सुतरामौदृशे प्रधानेऽध्यस्तं दृश्यत्वमेव ब्रह्मोपादानकं विसृष्टा-न्तरम्। तथा—"अनादिरात्मा सम्भूतिर्विद्यते नान्तरात्मनः। पुरुषः समवायीतु मोहेच्छाद्वेषकर्म्मजः॥" इत्येवं याज्ञ-वल्क्यादुक्तदिशादृश्यदर्शितया जायमानो यो जीवस्तत्राध्यस्तं द्रष्टृत्वमेव। ब्रह्मोपादानकं विसृष्टान्तरमित्यं दृश्यत्वद्रष्टृत्वयोर्वि-सृष्टयोरधिष्ठानाङ्गतया प्रधानपुरुषावपि "विष्णोः स्वरूपात् परतो हि तेऽन्ये रूपे प्रधानं पुरुषश्च विप्र!।" इत्येवं विष्णुपुराणा-दुक्तदिशा विसृष्टावेवोच्येते। तयोरविविक्तयोर्योगशक्त्या विवेके दृष्टे दृग्दर्शनशक्त्योरेकात्मतायाः संक्षयात् कैवल्याधिकारिणो दृग्दर्शनं दृश्यञ्चेति विसृष्टत्वं विश्वमेवोपतिष्ठते। तत्र दृग्दृश्ये

सुविवृते, दर्शनन्तु वैकृतमहान् लिङ्गमात्रं बुद्धिसत्त्वमिति यावत् । तासां ब्रह्ममहद्योनिरहं वीजप्रदः पितेति प्रोक्तायां भगवदुक्तौ ब्रह्मेति महतो विशेषणं प्राकृतमहद्व्यावृत्त्यर्थं बोध्यम् । शास्त्रे हि दृग्दर्शनदृश्येषु त्रिष्वेव ब्रह्मविवर्त्ताधिष्ठानेषु जीवो ब्रह्म, महद्ब्रह्म, शास्त्रं ब्रह्मेति विसर्गबोधकं तद्विशेषणं प्रयुज्यत इत्यनुसन्धेये सर्व्वैरेवाभिज्ञातव्यम् । गुणेषु परमेतदेव स्वच्छत्वात् प्रतिसंवेदिनं पुरुषमनुमापयल्लिङ्गमात्रमित्युच्यते । अस्मिन्नेव ब्रह्ममहति योनिभूते भगवान् विसर्गवीजमविवेकाख्यं प्रददाति । तत एवानयोर्दृग्दर्शनयोरन्योन्याध्यासो भवति । यस्माद्धि दर्शनस्यैव स्वरूपमानन्दं रजसा पीड़नं दुःखञ्च स्वीकृत्य रागद्वेषभाग्धर्म्माधर्म्मकृद्जीवः सर्व्वयोनिषु यावदविवेकं सञ्चरति । विज्ञानवादिनश्च तस्यैव ज्ञातृत्वं मन्यमानाः सम्विदेषा स्वयम्प्रभेति प्रवदन्ति । एवमेतत्त्रितयमध्यासस्य प्राक्सिद्धमेवाधिष्ठानीभूतमध्यासोपरमेप्यनुच्छिन्नञ्च यथाशास्त्रमुपदर्श्य शिष्टसिद्धान्तविरोधी विज्ञानवादिनामनुपपन्न-मायावादोपपादकः कारणैकतावादो मया प्रत्याख्यातः शास्त्रतथ्याभिनिवेशिभिः प्रणिधायानुभूयताम् ।

इति सामञ्जस्यदृढ़ीकरणाख्य एकादशः परिच्छेदः ॥११॥

——०——

# द्वादशः परिच्छेदः।

अथाद्वैतश्रुत्या प्रतिबोधितः कारणैकतावादः कथमेवं निषिध्यतामितिचेन्नैवं वदाहतत्वात्। अभेदं हि प्रतिपादयितुं प्रवृत्ता या श्रुतिः सा कथं कार्य्यकारणात्मकनामरूपभेदानुज्ञापयेत्। वरं यत्रास्ति कार्य्यकारणभावो वास्तवस्तत्रापि तं स्वगतभेदमपलप्यैव बोधयन्त्यभेदं "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य"मित्येवमाद्याः श्रुतयः। घटसरावमृदङ्गादिवद्दृग्दर्शनं दृश्यञ्चेति सर्व्वं वाङ्मात्रं मृत्तिकावद् ब्रह्मैव सत्यमितीयानेवोक्तायाः श्रुतेरर्थः। नचेदेवं तर्हि सूत्रकृतैव गीतायामनुकीर्त्तितं भगवदुक्तं विसर्गसंग्रहम्, योगवाशिष्ठोक्तं व्यतिविभिन्नकारणत्रितयवादम्, साङ्ख्ययोगादुक्तं विसर्गाधिष्ठानादीनां वस्तुत्वादिकञ्चावज्ञाय विज्ञानवादिनां मायावादः कथं पुनरावर्त्तनीयः स्यात्। "सर्व्वं खल्विदं ब्रह्म नेह नानास्तिकिञ्चने"त्येवमाद्याः श्रुतयस्तु "जन्मादि व्यवस्थातः पुरुषबहुत्व"मित्युपक्रमे "नाद्वैत श्रुतिविरोधो जाति परत्वा"दिति सूत्रेणैव साङ्ख्यकृता स्फुटीकृत्य व्याख्याताः, तथा "एकमेवाद्वितीयं ब्रह्म"इति या श्रुतिः स्वगतस्वजातीयविजातीयान् सर्व्वानेव भेदान्निवारयत्यसावपि "विदितबन्धकारणस्य

दृष्ट्या तद्रूप"मित्यादिसूत्रैः पुनः षष्ठः परिच्छेदे च। "न श्रुतिविरोधो रागिणां वैराग्याय तत्सिद्धे"रित्यन्तसूत्रैः सम्यगेव व्याख्याता, सुतरामिह मे पुनर्वाग्बाहुल्येनालम् ।

"आनन्दं ब्रह्मणो विद्वान्नबिभेति कुतश्चने"त्येवंविधासु श्रुतिष्वात्मनो निर्गुणत्वविरोधेन श्रूयमाणोऽसावानन्दोऽपि "दुःखनिवृत्तेर्गौणः। विमुक्ति प्रशंसा मन्दाना"मिति सूत्राभ्यां साङ्ख्यकृता सम्यगेव व्याख्यातः। अहो! इत्थमेव प्रच्छादनानर्हं कपिलललितप्रधानस्य मल्लत्वं विचिन्त्य शारीरकभाष्यकृता साङ्ख्यसूत्रमस्पृशतैव स्वभाष्ये साङ्ख्यकारिकोत्थापनपूर्व्वकं प्रधानमल्लो भूयोभूयो विजिग्यतराम्, यावत् सम्भवञ्च तत्-पुस्तकान्याच्छिद्य दाहच्छेदाभ्यां तावानेव तदभावः साधितो यावता दीर्घकालमेव षड्दर्शनानि व्याख्यातुकामैर्वाचस्पति-प्रभृतिभिः सांख्यसूत्रं नैव लेभे। ततो निसर्गगत्या कुतश्चित् कदाचिदनिरुद्धेन स्फुदितबहुपत्राङ्कतालपत्रलिखितं तदकस्मा-दासाद्य वृत्तिरस्य विरचिता। ततो विज्ञानभिक्षुणा कालार्क-भक्षितं सांख्यमित्यभिजानता प्रायशो वृत्तिवचः प्रत्याख्याय तद्भाष्यमकारि। तयोरुभयोरेवापव्याख्यानैः सांख्यसूत्रं तथा कदर्थितं यथा बहुभिराधुनिकैरिदमेव कपिलसूत्रमिति न विश्रब्धसेऽपि। कालान्तरेण तत् परिष्कृतमपि स्यादितीदृशीं भवितव्यतामप्यनुध्याय दुर्व्विजिगीषुणा तेन प्रच्छन्नबौद्धेन मन्वादीनां ग्रन्थानेव प्रत्याख्याय सांख्यसूत्रन्तु सूत्रकृता सहैवाप-लपितम्। प्रधानमल्लपालकस्य कपिलस्यापलोपे यत् प्रयोजनं

तत्त्रैव तेनापि स्वयमुद्गीर्णं "अस्मत्कृते च व्याख्याने न विश्वस्य-बहुमानात् स्मृतीनां प्रणेतृ"ष्विति स्फुटमेव। "गुणापवादेन तदन्यरोपणाद्भृशाधिरूढस्य समञ्जसं जनम्। द्विधेव कृत्वा हृदयं निगूहतः स्फुरन्नसाधोर्विवृणोति वागसि"रिति प्राचीना सत्कविर्भणितिर्मृषा न स्यात्।

नैमित्तिकमेव बहुत्वं नैसर्गिकमेव चैकत्वमित्यात्मनो जीव-ब्रह्मभावाभ्यां द्वैविध्यं वेदादि प्रसिद्धं सांख्यवेदान्तयोरुभयत्रैव सुविचार्य्योपदर्शितमास्ते। तथापि सांख्ये नैसर्गिकात्म-बहुत्व-वादोऽस्तीति दुर्विजिगीषोर्मिथ्यावादिता सांख्यसूत्रापलापेऽपि सांख्यकारिकायां सुव्यक्तमवगम्यते। सेयन्तु संक्षिप्ततया ब्रह्मो-ल्लेखराहित्यादवज्ञोपहतैव दुर्विजिगीषान्धधियो न पुनरप-लपनीया बभूव। अहो! यत्रैव सूत्रकृता निजस्मृत्यन्यस्मृतीनां सामञ्जस्यं प्रदर्शयितुं तत्सूचकाविरोधनामकस्याध्यायस्यारम्भे सांख्योक्तेश्वरासिद्धिं योगोक्तेश्वरपुरुषञ्च स्वसिद्धान्ताविरोधेन समाधातुमनवकाशदोषप्रसङ्गोऽवतारितस्तत्रैव दुर्विजिगीषुणा व्याख्याकृता स्वदोषप्रवर्त्तितमन्यथानवकाशदोषं घटयित्वा स्मृतिसमूहस्यैवोच्छेदो व्यवस्थापितः। हा हन्त! यद्येवमप्यविरोध एवाख्यायस्तर्हि यद्वयमसमेन वैद्येन रोगिणो रोगान्तरानयनपूर्व्वकं निपातनं तदप्यारोग्यमेवाभि-धातव्यं स्यात्। सूत्रात् प्रसङ्गपदोप्युत्सारणीयः स्यात्, समा-धानायैवहि दोषस्य प्रसक्तिरुल्लिख्यते, सुविदितमेवैतच्छास्त्रीय-भाषाविदुराणाम्। अपि च, "स्मृतिविरोधमुपन्यस्य परिहरति

आनर्थक्यमेवासां प्रसज्येत, तस्मात्तदविरोधेन वेदान्ता व्याख्या-तव्या इत्येवं स्वोक्तेरपि सामञ्जस्यं दुर्विजिगीषुणा नापेक्षितम् । यदि हि स्मृतीनामुच्छेदेनैवाविरोधस्तर्हि तेनैव सार्थक्येन किमासामानर्थक्यप्रसक्तिरपि निरस्ता, सूत्रकृता यासामत्रैव निराकृत विरोधानां पश्चात् प्रोक्तसूत्रनवकेन सार्थकताप्याख्यायि-तरामासामिवैषा गतिः । कियद्वा वक्तव्यं "कथम् अवधारितः अत्यर्थः स्मृत्यनवकाशदोषप्रसङ्गेन पुनराक्षिप्यते प्रायशो जनाः प्रख्यात प्रणेतृकासुस्मृतिष्ववलम्बेरन् तद्बलेन च श्रुत्यर्थं प्रतिपित्सेरन् अस्मत्कृते च व्याख्याने न विश्वस्युः"-रिति सन्दर्भः सूत्रव्याख्ययोरेककर्त्तृत्वे सत्येव सङ्गच्छेतान्यथा तु "सूत्रकृद्विवक्षा-निरपेक्ष एवाक्षेपः पुनराक्षेपश्च मयैव कृत" इति तथ्यमेव स्वयमुद्भिद्यतेतराम् । हा ! दुष्कालमाहात्म्यं सेयमपि कुव्याख्या शाङ्करीति कौलीन्यमपि चिरमधिकुर्व्वती शास्त्रविदामपि बहुभिरेव बहुधैव संसेविता, निन्दिता तु विरलैरेव । सुतरां सर्व्वदेशीयदर्शनवित्संघर्ष-विचारसह्येप्यधुना साङ्ख्योपाधिपरीक्षापाठ्यान्तर्गमितैतदंशकतया सा परं विचार्य्यतां नीता । ततश्च मया यथाप्रयोजनमंशतः परिस्फुटमेवोपमर्द्दितेति ।

इति श्रुतिप्रकाशाख्ये द्वादशः परिच्छेदः ॥१२॥

——:०:——

# त्रयोदशः परिच्छेदः ।

आप्तग्रन्थेषु सर्व्वेष्वेव कुव्याख्यावरणादुन्मोचितेषु पृथगर्थवत्त्वेऽपि मञ्जुलं सौसामञ्जस्यं सुधीभिरुपलप्स्यतेतराम् । प्रोक्तेन वेदान्तीय सूत्रनवकेन षण्णां दर्शनानां कैवल्याख्यं यदेकं मुख्यं प्रयोजनं सम्यगेव प्रतिबोधितं तदेवाङ्गादिसहितस्य वेदस्यापीति "ऊहादिभिः सिद्धिरष्टधे"ति सूत्रेण सांख्ये सिद्धिनिरूपणप्रसङ्गेन परिज्ञापितम् । प्रसिद्धत्वादेवानुल्लिखितास्ताः सिद्धयो दुष्कालवशाद्विचिकित्सनीयास्तथापीश्वरकृष्णकृतकारिकाग्रन्थे ताः सर्व्वा लभ्यन्ते । यथा—

"ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः ।
दानञ्च सिद्धयोऽष्टौ सिद्धेः पूर्व्वोऽङ्कुशस्त्रिविधः ॥"

इति कारिकायाम् ।

हा हन्त! एतस्यां क्रमसम्पाद्याः सिद्धयस्ताः क्रमणैवोपदिष्टा अप्यपव्याख्यानसमाच्छादितत्वात् परिलक्षितुं न शक्यन्ते । सुतरां मयाधुना कारिकांशान् व्याख्यायैव ताः परिदर्श्यन्तेतराम् । कैवल्यस्य प्रथमासिद्धिरूहशास्त्रप्रतिपाद्यत्वादूहाख्या । "लोके व्युत्पन्नस्य वेदार्थप्रतीते"रिति सांख्योक्तेर्यैरेवाधीतैर्वेदार्थग्रहणोचिता व्युत्पत्तिः स्यात्तान्यूहशास्त्राणि । तत्र

प्रसिद्धानि शिक्षा प्रभृतीनि वेदस्याङ्गानि षड़ेव, "इतिहास-पुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति॥" इति मनूक्तेरायुर्व्वेदः पुराणञ्च तथैव। ज्ञानार्ज्जनपरिपन्थिसर्व्वदोष प्रकोपिण प्रज्ञापराधपरिहारार्थक-स्यायुर्व्वेदस्य धातुमलाद्युत्पत्त्यादिविविधवार्त्तामयत्वादितिहासत्वं व्यवस्थितम्। मोक्षोपयोगिवाक्ये व्युत्पत्त्याधायकत्वफलवत्त्वात् साधुकाव्यस्यापि तदन्तर्भावः। आन्विक्षिकी धनुर्व्वेदार्थ-शास्त्रादिकन्तु सर्व्वमूहवद्भिर्भूतमेवाधर्व्वसातवत्रम्, कैवल्य-प्रातिकूल्येन वेदान्तोक्तशिष्टापरिग्रहमधेय गणनीयत्वादिति दिक्। वेदस्यैव शब्दप्रमाणाग्रिमतयात्र शब्दपदेन स एव प्रतिबोधित-स्तज्जनिता द्वितीया सिद्धिः शब्दाख्या। ततो वेदविचार-शास्त्राणां प्रागुक्त क्रमग्राह्याणां षस्नामेव दर्शनानामादेरदर्शने-ऽध्ययनं "नान्यः पन्था विद्यतेऽयनाये"ति श्रुत्युक्तमयनमधिकृत्य कथनम्। तत्र हि मन्त्रोपनिषत्प्रतिपाद्ययोर्विसदृशधर्म्मयोः स्वर्गापवर्गनिमित्ताभ्यामधिकारभेदव्यवस्था विवृतैव मया, तस्मात्तज्जनिता तृतीया सिद्धिरध्ययनाख्या। न्यायदर्शने मोक्षश्रवणादादावन्तवत्सु दुःखाकरेषु सुखभोगेष्वनास्थया लालसाक्षयो भवति, तस्मात्तज्जनिता चतुर्थी सिद्धिः परिणाम-विघाताख्या। ततो वैशेषिकदर्शने मोक्षारम्भकज्ञानकर्म्माभ्यां परमाणुदर्शिनः शरीरदुःखाभावः कथितस्तस्मात्तज्जनिता पञ्चमीसिद्धिस्तापविघाताख्या। ततः सांख्यदर्शने प्रागा-रब्धमोक्षस्य विशेषकरणाद्विवेकोदयेन वासनाः क्षीयन्ते,

तस्मात्तज्जनिता षष्ठीसिद्धिः संस्कारविघाताख्या। अस्या एव षष्ठ्याः सिद्धेस्तत्त्वं साङ्ख्यदर्शनमतेः षष्ठीतन्त्रनाम्नैवेदं कारिकाया-माख्यातम्। ततो योगदर्शने विवेके पूर्णे पुनरनिष्टशङ्कानिरासेन मोक्षो नियंस्यते, तस्मात्तज्जनिता सप्तमीसिद्धिर्मित्रलाभाख्या। ततो वेदान्तदर्शने ख्यातिनिरोधेन ज्ञानसमाप्तेः कैवल्यमेवोपतिष्ठते, तस्मात्तज्जनिताष्टमीसिद्धिः शोधनाख्या। दानपदं कारिकायां शोधनार्थकदैप् धातुनैव सिद्धमिति विस्तरेणालम्।

सैषा कैवल्यस्य सिद्धिरेव शिष्टैः परिग्राह्या सिद्धिरित-रास्तु याः सत्त्वोत्कर्षविशेषलभ्या उच्चावचाः प्रभूततमाः सिद्धयस्ताः सर्व्वा एव प्रकृतपुरुषार्थानुपयोगित्वात्तैरपरिग्राह्याः। अनुसत्त्वशुद्धिस्वयमेवोपचीयमाना अपि ताः कैवल्यार्थिनां प्रीतये न स्युरितदेव "ते समाधावुपसर्गाव्युत्थाने सिद्धय" इति योगसूत्रेणोक्तम्। सुतरां "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति श्रुतेर्विवेकख्यातिमता योगिना ता उपेक्षा-वोपसर्गभूता, अद्वैतमुपास्यते तदेकसाध्याय प्रकृतपुरुषार्थाय, विवेकसुहृदो हि प्राप्तिर्गुणवैराग्यदात्रीति।

न च पुनरनिष्टशङ्कारहितेनानेनाप्रलयमेव ता रक्षणीयाः स्युरिति वाच्यमुभयार्थितानुपपत्तेः। कैवल्ये हि गुणसङ्गाभावो गुणसङ्गे च कैवल्याभाव इत्युभयोरेकतरस्योपादेयत्वे हेयत्व-मेवान्यतरस्येति सुगमम्। जीवन्मुक्तानामित्थं शास्त्रकथनस्या-प्रसङ्ग इत्यपि न वाच्यम्, "इतरथान्धपरम्परा" इत्यादि सांख्यसूत्रै-रेतदध्यात्ममेव विवृतं द्रष्टव्यम्। ये पुनरविवेकिनस्ता

अणिमाद्याः कामयमाना यथोचितैः कर्म्मभिः स्वर्गभेदेषूपस्थाय ताः परिगृह्य यावदायुर्मोदन्ते तेषामेवेमाः सिद्धय इत्युच्यन्ते तावत्तदुचितस्थानलाभस्य तेषां सालोक्यमुक्तिरित्याख्यायते, सेयमप्यणिमादिसिद्धिवदपरिग्राह्यैव शिष्टानाम् । तथा च "संयोगाश्च वियोगान्ता इति न देशादिलाभोऽपि" "नाणिमादियोगोऽप्यवश्यम्भावित्वात्तदुच्छित्तेरितरयोगव"दिति सांख्यसूत्रद्वयेन विशदमाख्यायितराम् ।

माहेन्द्र-प्राजापत्य-जनतपःसत्यनामकेषु पञ्चधा स्वर्गलोकेषु कामिनः कल्पावधि यावत्सर्गपर्य्यन्तविभिन्नायुष्कालं भुक्तसिद्धयः पुनरावर्त्तन्ते पुण्यक्षयादित्येवं सालोक्यमुक्तिविवरणं पुराणेषु बहुलमेव द्रष्टव्यम् । ब्रह्मणा सह सत्यलोकवासिनामनावृत्तिश्रुतेः पञ्चमीयं सालोक्यमुक्तिः कैवल्यमुक्तिरिव शिष्टैरपि परिग्राह्या भूयादिति चेन्नैवं गीतायामाब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्ज्जुन! इति भगवदुक्तेः सर्व्वेभ्य एव लोकेभ्यः पुनरावृत्तिर्ध्रुवमध्यवसेया । श्रुतिबाधाप्येवं नैव भविता "तत्र प्राप्तविवेकस्यानावृत्तिश्रुति"रिति साङ्ख्यसूत्रेणैव श्रुतेर्व्याख्यातत्वात् । यो हि योगीहलोक एव प्राप्तविवेको विशुद्धायुराविवेकपरिपाकं सत्यलोकमधिवसति तस्यैव ब्रह्मणा सह प्रलयात् परतोऽनावृत्तिः श्रुत्या निगदिता । तस्मादिवं कस्यैवानावृत्तिनिदानत्वं सर्व्वत्रैव सुव्यवस्थितम् । शुक्लकर्म्मणा सत्यलोकमासाद्यैव पुंसा विवेकोऽर्ज्जनीयः स्यादिति तु वाग्विड़म्बनामात्रम् । इहैवैश्वर्य्यार्थिनो यस्याशुक्लाकृष्णं कर्म्म

नासादनीयं तस्य तदैश्वर्य्यमुपस्पृश्यैव तद्वैराग्यादिकमपि संग्रहणीयमित्युद्भ्रान्तसिद्धान्तः कथं "न जातु कामः कामाना-मुपभोगेन शाम्यति" इति मनूक्तिबाधितोऽपि विचारसहः स्यात्।

नन्वित्थं कामिभोग्यैव सालोक्यमुक्तिर्यत्रोपदिश्यते तादृशं पुराणमपि कथमूहशास्त्रमाख्यातमिति चेदुच्यते सर्गप्रतिसर्गादि विवेकोचितवृत्तान्तबहुलत्वादेव पुराणस्याप्यूहशास्त्रत्वमध्यव-सातव्यमन्यथा काम्यविधिभागस्य हेयत्वादेव शास्त्रस्यापि हेयत्वे वेदस्य प्रथमदर्शनादेश्च सैव गतिः स्यात्। सुतरां यदंशे शिष्टानां हेयत्वं तत्रैव कामिनामुपादेयत्वञ्चास्तीत्येवं क्वचिदपि हेयत्वस्यानियमेन सर्व्वथा हेयत्वस्यासम्भवाद्विविधपुरुषार्थकं शास्त्रं कैरपि विगेयं न स्यादतएव "तस्य निमित्तपरीष्टिः" इति सूत्रेण प्रयोजनाधीना वेदस्यांशतो ग्राह्यतैव निरूपिता। ततश्चांशान्तरे या हेयता सा तदानीमेव प्रयोजनानुपस्थिते-रतीतानागतान्यतरकाले तु तत्राप्युपादेयताया अवश्यम्भावा-द्वैदैकभागस्य सर्व्वथा हेयत्वं कथमिव सम्भविता।

यत्तु श्येनयागादिकं बलवदनिष्टाननुबन्धीष्टसाधनता बुद्धेरविषयत्वादेव सर्व्वथा हेयमाख्यायते विमूढैस्तदपि तदंशे वेदस्याननुष्ठानलक्षणमप्रामाण्यं विद्वद्भिरपि किमनु-मोदनीयं स्यात्। अहो! कामस्य प्राबल्यमेवेष्टानिष्टवैषम्य-विचारानपेक्षं सदा पश्यन्तोऽपि ते दिवान्धा न पश्यन्ति, यदधीनाः पुरुषा निषिद्धमप्याचरन्तो भवन्त्यधोलोकगामिनः सद्यो वा

राजदण्डप्रायश्चित्ताभ्यां निपीड्यन्ते। तथा रोगाक्रान्ता अपि स्वज्ञातमेव कुपथ्यमुपभुज्य दीर्घतमा यातनाः के नाम न भुञ्जते। अपि च पाण्डु राजा पत्न्या ब्रह्मशापं स्मारयित्वा मुहुर्निवारितोऽपि मैथुनं भजन् ममार, तादृशसक्तत्सम्भोगः सद्यो मरणान्तानामिष्टानिष्टानां कतरेषु बलवत्त्वं विमूढैराख्यातव्यम्। हन्त! तथाविधक्षुद्रेष्टवृहदनिष्टफलकेषु ये निरवधानाः प्रवर्त्तन्ते तरां ते पुनरदृष्टानिष्टफलकश्येनयागादेः प्रतिनिवृत्ता भवेयुरिति। प्रलपन्तस्त एव वा वावदूकाः कुतो भोगाभ्यासविवृद्धरागानीतजन्मजरामरणपरम्पराकमनियतसीमं संसारदुःखमतिबलवदेवानिष्टं जानन्तोऽपि क्षुद्रतमेष्टफलकसोमयगादिभ्योऽपि न निवर्त्तन्ते। तस्मात् कामदासानामिष्टानिष्ट-बलवैषम्यविचारे नास्त्येवाधिकारः क्वचिदपि। ये तु बहुजन्मकृतविवेकविचारनिगृहीतकामास्त एव वैषम्यविचारपटवः सर्व्वेभ्य एव काम्यकर्म्मभ्यो विरमन्ति। सुतरां मूर्खभीतस्याम्नायस्य क्रियार्थकत्वं मुण्डमेव खण्डयित्वा मण्डनीयं यत् पाण्डित्यं तदिह शास्त्रतत्त्वग्रन्थेषु न प्रचारणीयमिति विस्तरेणालम्। इत्थं प्रसङ्गेन कामस्यैव हानोपादानाभ्यां शिष्टाशिष्टविभागोऽपि प्रदर्शितः। कामस्यैव हि दौर्ब्बल्यप्राबल्याभ्यां सभ्यत्वासभ्यत्वसाधुत्वासाधुत्वभद्रत्वाभद्रत्वादीनि च पुंसामवधार्य्यन्ते स्म, दुष्कालमाहात्म्योपचितायास्त्वविद्यायाः स्वभाववैपरीत्येनेदानीं कामोचितनित्यनूतनविविधद्रव्यनिर्म्माणकृतार्थी-कृतविज्ञानाः कामानुकूलविपुलविद्याविज्ञार्ज्जन-दूरीकृतपूर्व्वाचाराः स्वकामप्रतिकूल-

पराभिसन्धाननिपीड़न-निपातननिपुणाः स्वकामवशाघातवशापादितात्मानश्च सभ्य-सभ्यतर-सभ्यतम-महासभ्याः कथ्यन्ते तरामताहशाः पुनरनीहशा एव वक्तव्या इति दिक्।

इति सामञ्जस्यसुदृढ़ीकरणाख्यस्त्रयोदशः परिच्छेदः ॥१३॥

——०——

# चतुर्द्दशः परिच्छेदः ।

"आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा । कामरूपेण कौन्तेय ! दुष्पूरेणानलेन चे"ति भगवदुक्त्या कामिनः सर्व्व एव कैवल्यपराङ्मुखा बोध्यास्तेषु ये विहितारम्भं निषिद्धपरिहारमिन्द्रियनिग्रहञ्च समस्तमेवाचरन्ति ते भवन्त्यूर्द्ध्वगामिनः । ये तु समस्तमेव तदाचरणं परित्यजन्ति ते सुव्यधोगामिनः "विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥" इति मनूक्तेः । ये पुनस्तदाचरणव्यस्तसेविनस्ते पुण्यपापराशीनां सामव्यैषम्यगतविविधतारतम्यात् स्वर्गनरकान्तरालगतान्तरिक्ष-द्वीप-पर्व्वत-पयोधि-पातालेषु ब्रह्माण्डावरण-लोकालोकपर्व्वते च देवादिस्थावरान्त-विविधयोनिषु जायन्ते । अण्डञ्च प्रधानस्यानुरवयवो यथाकाशे खद्योत इति व्यासोक्त्या प्रधानादण्डानि कति कति सम्पद्यन्ते तत् संख्यानं नैव सम्भवेदसीमत्वात् कारणस्येति प्रज्ञायते । प्रत्यण्डमित्थं जीवानां भोगभूमयः सप्तलोकास्तदन्तर्गतैव प्रोक्ता सालोक्यमुक्तिरितरास्तु मुक्तयस्तिस्रो लोकातीतास्ता वायुपुराणादौ प्रदर्शिताः । यथा—

"दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतं पूर्णं सहस्रन्त्वाभिमानिकाः ॥

बौद्धा दशसहस्रन्तु तिष्ठन्ति विगतज्वराः।
पूर्णं शतसहस्रन्तु तिष्ठन्त्यव्यक्तचिन्तकाः।
पुरुषं निर्गुणं प्राप्य कालसंख्या न विद्यते॥" इति।

षड्‌विधा एवैते जितकामा मुमुक्षया कृतनिर्वीजसमाधयो लोकातीताः। तेषु चरमस्यैव गुणातीतत्वात् पुनरावृत्त्यनुपपत्त्या कृतार्थतायां कालानवच्छिन्नत्वमुक्तमितरेषां पञ्चानामनुज्झित-गुणसङ्गानां पुनरावृत्त्यवश्यम्भावेन यथास्वमवस्थितिकालानां संख्याभेदा निगदिताः। एतेषामिन्द्रियभूताहङ्कारबुद्धिषु मनोगत्या प्रविष्टानां वैदेह्यं सायुज्यमुक्तिः, शेषाणाञ्चाव्यक्तलीनेन चित्तेन प्रकृतिलयत्वन्तु सारूप्यमुक्तिराख्यायते। एते पञ्च मुमुक्षवोऽपि विवेकख्यातिमनपेक्ष्यैव हठाचरितसमाधयः पञ्चसु कोषेषु निबद्धाः पञ्चधा विपाकान् भजन्ते। अनिष्को-षितात्मनामेषामीदृशविपत्त्यवश्यम्भावात् "अविद्यया मृत्युं तीर्त्त्वा विद्ययाऽमृतमश्नुत" इति श्रुतिर्विवेकख्यातिमतामेव वेदान्ताधिकारं ख्यापयतीति मयाष्टमपरिच्छेदे विशदमाख्यायि-तराम्। इत्थं सर्व्वाः पुरुषगतयो मया संक्षेपेणैव प्रदर्शिताः। आसु या दुःखप्रधानास्ताः पुरुषाणामनर्थाः प्रतिसिद्धकर्म्मादि-जन्याः। यास्तदितरास्ता एव तेषामर्थाः शास्त्रविहित-कर्म्मादिजन्याः। पुरुषार्थानां प्रभेदाः प्रबन्धोपक्रमे मुख्य-गौण-गौणतरभावेन प्रोक्तास्तथा गौणतमत्वेनैव परिगणनीयाः कोषाभिरूपाः पञ्चधार्थाभासास्तेषु सर्व्वेषु यथाकथञ्चित् पुरुषार्थस्य विधानेनैव तद्विधायकशास्त्रादेः सार्थक्ये व्यवस्थिते

मदुपक्रान्तं सर्व्वदर्शनसार्थक्यमत्रैवान्तर्भूतं यथायथमनुसन्धाय सुधीभिरुपलब्धव्यम् ।

अथ कथं कोषाश्रीनामर्थाभासत्वमिति चेदुच्यते । अर्थ्यते याच्यते लिप्साविषयीक्रियते यः स खल्वर्थः पुरुषस्य भोगापवर्गान्यतर एव तृतीयस्यानुपपत्तेः । प्रवृत्तिनिवृत्तिमार्गाभ्यामाश्रवयोस्तयोर्गौणमुख्ययोः पुरुषार्थयोः साधनानि निखिलान्येवार्षग्रन्थेषु समुपदिश्यन्ते, न तु कोषप्रवेशोचितोपदेशस्तेषु क्वापि दृश्यते । वायुपुराणे कोषप्रवेशानामनुमोदनदर्शनात्तद्विधयोऽपि कल्पनीयाः स्युरिति चेन्नैवं तत्रात्मार्थिनां प्रत्ययवैषम्यजनितफलपार्थक्यस्य प्रस्तुतस्य कीर्त्तनेनैव यद्यनुमोदितत्वं तर्हि पुनः "ऊर्द्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः । जघन्यगुणवृत्तिस्थां अधोगच्छन्ति तामसा" इत्येवमादिष्वधो गमनादेरप्यनुमोदितत्त्वापत्तिः स्यात् । हन्त ! जलपथेनेव निवृत्तिपथेन गन्तव्यमभिधावतां गाधपातिनीव पोते कोषनिरुद्धे वेतसि योऽयं मुहुरपि सम्भवी हटविश्रामघटको वृथा कालातिपातः सोऽपि कथं नाम पुरुषार्थोपदेष्टृभिरुपदेशनीयः स्यात् । कोषप्रवेशानामात्मार्थिभिरनर्थनीयत्वेऽपि स्वर्गादीनामिवान्यैरर्थनीयत्वं स्यादित्यपि न वाच्यमुभयेषामेव लिप्सितभ्रान्त्यानीप्सितलाभस्य तुल्यत्वात् । यथा हि किलापवर्गार्थिनः केवलात्मभ्रान्त्या जड़ान्यतमलाभेन वञ्चितास्तथैव भोगार्थिनोऽपि भोग्यानन्दभ्रमेणानीप्सितानन्दकोषलयेन कोषान्तरप्रवेशेन वा वञ्चिता एव । सुतरां शर्करास्वाद एव भद्रो न तु शर्करीभाव इत्येतद्विषयिणीमेव

लोकप्रसिद्धिं स्मरतामानन्दभोगार्थिनामानन्दमयो भावोऽपि यदि नार्थनीयस्तर्हि का कथा पुनः कोषान्तरप्रवेशस्य। एवञ्च मुमुक्षुबुभुक्षूभयभ्रान्तिविषयत्वादेव कोषाणीनामर्थाभासत्वं सुव्यवस्थितमेव शास्त्रतथ्याभिनिवेशिभिरनुभूयताम्। अथ कोषाणीनामनर्थत्वमेव कुतो नोक्तमिति चेत्तदपि कथ्यते। निषिद्धाचरणादिजन्यो नरकादिलोकनियतो यो ह्यनर्थः स किल "हेयं दुःखमनागत"मित्युक्तेरागन्तुकदुःखभोग एव बोद्धव्यः। तथा च सति निरुद्धतापपरिणामकेषु संस्कारमात्रावभासेषु कोषेषु प्रवेशस्य जन्ममरणद्वन्द्वावर्त्तनबाधकविश्रामस्य कथमप्यनर्थत्वानुपपत्तेरर्थाभासत्वमेव सुस्थितम्, अतएवात्र वैदेह्यप्रकृतिलयत्वयोः सायुज्यसारूप्यसंज्ञे अपि सालोक्यवद्गौणमुक्तित्वं ख्यापयतः। "दुःखमेव सर्व्वं विवेकिन" इत्युक्तेः कोषप्रवेशः कैवल्याधिकारिण एवानर्थतुल्यत्वादनर्थाभासोऽपि निगदितुं शक्यते। यथा वा तथावासौ भवतु, पुरुषरुचिवैचित्र्यादर्थभ्रान्तेश्च नैसर्गिकत्वादमुष्य सन्त्येवाधिकारिणः सन्ति च तद्विधायकानि बौद्धादिमतानि चिरन्तनान्येव सर्व्वाणि। मृग्यभेदानुगतमार्गभेदानां प्रतिद्वन्दिताविरहादेव शिष्टाशिष्टदर्शनादीनामसामञ्जस्यगन्धोऽपि नास्ति। यच्च सागरेऽपसुना दक्षिणेनैव पथा गन्तव्यं नान्येन, हिमालयेऽपसुना चोत्तरेणैव पथा नान्येनेत्येवं सांख्यादौ बौद्धादिमतप्रत्याख्यानं तदप्यसमञ्जसं न भविता विधेयविधानप्रतिनियमरक्षणस्यैव समीचीनतया सर्व्वत्रौचित्यात्। किन्तु यद्विधानविशेषस्वविधेयपिधानेन विधानान्तरीय-विधेयोपस्थापनं

तत्रैव सामञ्जस्याभावो व्यवतिष्ठते । द्विविधं पुनरेतद्दुर्विजिगीषु-दुर्व्विदग्धान्यतरसाधितत्वात् । तत्र प्रथमोदाहरणं शारीरकभाष्यादिर्द्वितीयोदाहरणन्तु प्रभूततममेव निखिलाशवादसहचरीभूतम् । सर्व्वस्मादेवास्मात् कैवल्यशास्त्रस्य सामञ्जस्यमुद्धर्त्तुं ममायमुद्यमः शास्त्रीयसारेप्सुभिः कृतार्थो क्रियताम् । न पुनरमीभिरिह मदुक्तौ कथमपि शङ्कितव्यमीदृगागमान्ध-परम्परयोरभिभवप्रादुर्भावाभ्यामनुयुगं धर्म्मादिह्रासस्यापि शास्त्रैरेव कीर्त्तितत्वात् । तथा च मनुसंहितायां "चतुष्पात् सकलो धर्म्मः सत्यञ्चैव कृते युगे । ना धर्म्मेणागमः कश्चिन्मनुष्यान् प्रतिवर्त्तते ॥ इतरेष्वागमाद्धर्म्मः पादशस्त्ववरोपितः । चौरिकानृतमायाभिर्धर्म्मश्चापैति पादशः ॥" न चैवं प्राचीननवीनव्याख्यानां व्यतिविरुद्धानामन्यतमग्रहणेऽपि संशयः कुतो न स्यादिति वाच्यं सामञ्जस्याभिरोचक-शास्त्राधिकारस्यैव तदपनोदकत्वात्, सुतरामत्र मे वाक्याधिक्यं सर्व्वथैव वृथा स्यादिति परित्यक्तमेवास्ताम् ।

इति सर्व्वदर्शनसार्थक्यनामा चतुर्द्दशः परिच्छेदः ॥१४॥

——०——

# पञ्चदशः परिच्छेदः ।

एवमेतत् षण्णां दर्शनानां सामञ्जस्यं चरमदर्शनीयैर्नवभिः सूत्रैः सामान्यादुपस्थापितं दर्शनानां प्रारम्भव्याख्यानप्रदर्शनेन विशेषादुपपादितं कारणविवरणादिप्रसङ्गेन दृढ़ीकृतं सिद्धिप्रदर्शनप्रसङ्गेन सुदृढ़ीकृतञ्च। तस्मादेव षण्णामेषामुपनिषत्सारमयाणां निरूपितक्रमग्राह्यतया सोपानवदयनैक-मार्गत्वेऽवधारितेऽपि मार्गादागन्तुकविघ्नानामुत्सादनं विना जिगमिषूणामयनं न सिध्येत्। मार्गे ह्यत्र कलिग्टहैरपव्याख्यात्विभिरनात्मज्ञैरुपस्थितो भ्रमप्रमादविप्रलिप्सादिवीजेभ्यो द्रुतमुद्भिन्ना विरोधप्रमुखा विषद्रुमाः। यदविश्वासविषसंक्रान्तिकृतमूर्च्छाकाः सुचिराय भृशं निपतन्ति पथिकाः। यः खलु विरोधो विरुद्धयोरसामञ्जस्यादेकतरोच्छेदकः, स तु क्वचिदप्याप्तवाक्येष्वात्मलाभाय नालम्। ये पुनर्विरुद्धानां सामञ्जस्यात् स्वयमेवोच्छिद्यन्ते ते किल विरोधाभासा बहुशः सन्ति शास्त्रेषु निखिलेषु, येषामेकस्यैव त्रिविधोपादानविषयकस्य समाधान"मोचतेर्नाशब्द"मित्यत्रापव्याख्याननिराकरणप्रसङ्गेन मया सम्यगेवोपदर्शितम्। एवमेव प्रसिद्धाः किलेश्वरस्य सिद्ध्यसिद्धी, शब्दानां स्थिरत्वक्षणिकत्वे, इन्द्रियाणां भौतिकत्वाहङ्कारित्वे,

वेदानां पौरुषेयत्वापौरुषेयत्वे, कार्य्याणां सत्तासत्ते, जगतां सत्यत्व-मिथ्यात्वे इत्यादयो भावाः प्रतिद्वन्द्वं वर्त्ततिविरुद्धा इव प्रतीयन्ते । समाधाने तु सर्व्वेषामिवैषां याथातथ्यं सर्व्वैरेवाङ्गीकार्य्यम् । अमीष्वेकैकद्वन्द्वविवरणार्थमेवैकैकप्रबन्धप्रणयनमावश्यकं भूयात्, सुतरामिह मेऽधुना मौनितैवास्ताम् । अहो ! ते विषवृक्षवीजिन इहापातविरोधानामाभासत्वमुपलब्धुमशक्नुवन्तो "वेदा विभिन्नाः स्मृतयो विभिन्ना नासौ मुनिर्यस्य मतं न भिन्न"मित्युक्तेरेतेषु मतभेदेषु यथारुचि विरुद्धैकतरग्रहणं कार्य्यमितीव सिद्धान्त-पाशमाश्रयन्तो विरोधमतभेदयोरेकपर्य्यायतामेवापातयामासुः । किन्तु हा कापिलदर्शनस्यादावीश्वरासिद्धेरिति मध्ये चेद्दशेश्वर-सिद्धिः सिद्धेति महामुनेरेकस्यैवोक्तिभेदयोरसामञ्जस्यानुपपत्तेः किं नाम सामञ्जस्यमित्यपि विचारयितुमिमे न सेहिरे, विभिन्न-कर्त्तृकेषु दर्शनान्तरेषु शब्दादीनां द्वैविध्यविचारस्य पुनः का कथा । तथा मुक्तितत्त्वानभिज्ञैरेव तैः क्रमग्राह्याणामपि दर्शनानां प्रत्येकस्यैवेतरनिन्दानिबद्धनिरपेक्षताकस्य प्रस्थान-भेदत्वं परिकल्प्य यागादिकर्म्मैव वा षोड़शपदार्थज्ञानमेव वा मुक्तये ग्राह्यमित्यमिच्छाविकल्पोऽपि व्यवस्थापितः । सर्व्वशास्त्र-नियतं विवक्षितार्थोपदर्शकं पञ्चाङ्गाधिकरणमनाश्रित्यैव प्रायः प्रतिसूत्रं प्रतिश्लोकञ्च निर्व्वासितविवक्षाभिरपव्याख्याभिर्दर्शनानि न परं शास्त्रान्तराण्यपि तैस्तथा क्षतविक्षतानि, यथा ब्रह्मलिङ्गेष्वात्मकथितेष्वपि तेषु दुर्निवारामेवानास्थामुद्भावयन्ती गाढ़तमैवान्धपरम्परा प्रवर्त्तिता । यदनुवासितधियः सुधियोऽपि

सर्व्वज्ञत्वं नाम निरावरणं ज्ञानमस्तीत्येव न विश्वसन्ति। "अस्ति काष्ठाप्राप्तिः सर्व्वज्ञवीजस्य सातिशयत्वात् परिमाणव"दित्यनुमानमपि तद्विषयकमवजानन्त्येव। अमी हि परमतखण्डनताण्डवपाटवमात्रं पण्डितमण्डनसारं निश्चितवन्तो "नवयं षट्पदार्थवादिनो वैशेषिकादिव"दिति साङ्ख्योक्त्या वैशेषिकोक्तेरिव परपरवादैः पूर्व्वपूर्व्ववादानां यावत् सम्भवं निरसनमेवोचितं नव नवाहरणपरस्यानुसन्धानस्य नैसर्गिकत्वादित्युद्भ्रान्तसिद्धान्तमेवावलम्ब्य लौकिकानामिवाप्तानामपि ज्ञानं सङ्कीर्णम्, वाङ्मयञ्च यथारुचिभावितार्थं मन्यमानाः खण्डनपाण्डित्यगुरुषु भक्तिमन्तस्तेषामेवाद्भुतानि चरितानि स्वरुचिविरचितानि दृश्यकाव्यतामपि नयन्ते। तत एव शास्त्रशास्त्रकारयोर्महिमानं श्रोतुमप्यसहमानास्तथा वक्तारमपि जनं निजापकारिणमिव विद्विषन्तीतीयतीमेव चरमां सीमामुपगतवती दुष्कालबालत्रलीला सम्प्रत्यपि किं न शाम्येत्?

"शास्त्राघातात् कलेर्बाल्यं यौवनं दण्डलाघवात्।
प्रौढ़ता स्यादराजत्वाद्वार्द्धक्यं कल्किसङ्गरात्॥"

इति लोकशास्त्रप्रसिद्धानामेषां कलिवयसां यौवनमेवाधुनानुमेयं दण्डलाघवदर्शनात्। आधुनिकानां हि मानवानां शास्त्रविश्वासविलोपानीतकदाचाराणां शास्त्रीयदण्डवार्त्तैव निवर्त्तते स्म। ये तु सर्वैरेवानुपेक्षणीयाः समाजसाधुतारक्षका राजकीयदण्डास्तेष्वपि मन्वाद्युक्तानां विचित्रवधाङ्गुलीच्छेद-वेत्राघातादीनां

कायिकदण्डानां महाप्रस्थानमेवाभवत्, केवलप्राणदण्डस्यापि दण्डकमण्डलु ग्रहणमारब्धमेव दूरतः श्रूयते। यस्मिन् सुसम्पन्ने यौवनपूर्त्तौ सत्यामराजकतैवागत्य तृतीयं वयो दर्शयिष्यति। यौवनप्राबल्येऽपि बाल्यलीला न कथं पलायतामभ्यस्ततया तु दुस्त्यजत्वादियं शनैरेवापसार्य्यते प्रकृत्या। कथमन्यथा विचित्र-भोगि-भोगभीषणेऽपि कलियौवने निखिल-भारतीय-पण्डितमहा-मण्डलसमाक्रान्तस्य शास्त्रसामञ्जस्यार्थकप्रश्ननिकरस्य तदुत्तर-दातृषु शास्त्रावरणनिराकरणाय ममोपक्रमस्यापि सम्भवोऽभवि-ष्यत्। इत्थमेव मयेव बहुभिः शास्त्रतथ्याभिनिवेशिभिः षड् दर्शनवदन्यशास्त्राणामपि सम्पाद्यमानमावरणोन्मोचनमागामि-सत्ययुगात् प्रागेव पूर्णतां यायादित्येवमावरणादिकमपि सर्व्वमेव प्राकृतं कर्म्म, न तु पुरुषाधीनं किञ्चिदपि सम्भवति। तथा च सुप्रसिद्धैव "प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्व्वशः" इति भगवदुक्तिः। प्रकृत्यैव कारितं कर्म्म पुनः पुरुषेण परिहर्त्तुमप्यशक्यमिति च "न करिष्यसि यन्मोहात् करिष्य-स्यवशोऽपि त"दित्येवं भगवतैवोक्तम्। अतएव जीवन्मुक्तैरप्या-कैवल्यादन्धपरम्परानिवर्त्तकं कर्म्म कार्य्यते प्रकृत्यैवेति मया प्रागेव सुविवृतम्। कार्य्यकारणात्मनां गुणानां प्रतिनियमस्य व्यभिचाराभावात् खलु शास्त्रघातात् कलेर्बाल्यमित्याशोदेश एव सम्प्रदायविद्वेषभयपरिगृहीतमौनमपि मामीदृशे कर्म्मणि साहसोद्यमावलम्बयत्। प्रबन्धोपसंहृतौ मया शास्त्रसामञ्जस्य-मभीप्सूनामन्तिके सविनयमेतदेव निवेद्यते, यन्ममेव भवतामपि

शास्त्रेषु निखिलापवर्गाश्वशाननिरपेक्षमेवानुसन्धानं प्रवर्त्ततां तथा सत्येवाप्तानामलौकिकज्ञानस्याभ्यपरम्परा निवर्त्तकत्वमनादीनाञ्च शास्त्राणां लोकहितैकपरत्वञ्च क्रमश एवोपलप्स्यतेतराम्। अथादौ ज्ञानस्यालौकिकत्वं शास्त्रस्य चानादित्वं कथमिव प्रत्येतव्यमिति चेत्तदपि वारिधिवारिविन्दूवत् कणामात्रमुदाहृत्य प्रबन्धोपसंहारः समाप्यते मया।

प्रथमं तावदावरणलोपात् सूक्ष्मव्यवहितविप्रकृष्टेष्वव्याहतं यदलौकिकं ज्ञानं तस्यालौकत्वे किल मुमूर्षौ रोगिणि विषप्रयोगो नैवाभविष्यत्। तथाहि वह्नेर्दाहिकाशक्ति-रकस्मात् संसक्तपाददाहादिनावधार्य्यते, तथैव विषस्य प्राणहारिणी शक्तिरपि सहसा विषाविष्टदेहानां पातदर्शनादवधारणीया। किन्तु तस्यैव सा पुनः प्राणरक्षिणी शक्तिः साथकथमाप्तोपदेशं विनैवावधारयितुं शक्या स्यात्। परीक्षयैव साप्यवधारणीयेति चेदहो परीक्षावालिश्यम्। संशय्यावधारणं हि परीक्षणं तत्तु यथाकथञ्चिद्बुद्धिगोचरीभूतेष्वेवोपपद्यते सर्व्वत्र। सुतरां प्राणहरमपि विषं प्राणरक्षकं स्यान्नवेति संशयस्यैव यत्रानवकाशस्तत्र पुनः परीक्षायाः प्रसङ्गोऽपि नास्त्येव प्रसिद्धशक्ति-प्रतिरोधितः सर्व्वथा संसर्गस्य भीषणस्य विषस्य भ्रान्त्यापि तादृश-प्रयोगानुपस्थानात्। चिकित्सकस्तथा ब्रवीतीति चेत् पथि समागम्यताम्, भवतैतत् कुतो ज्ञातमिति चासौ जिज्ञास्यता-मथानेन तद्वत्तैव कश्चिदुल्लिख्येत, सोऽपि जिज्ञासितव्य इत्य-मन्विष्यानवस्थानुपपत्तेराप्त एव कोऽपि मूलवक्तावश्यमेवाव-

धार्य्यते । एवमेव विविधवस्तुशक्तिप्रभृतीनां सूक्ष्मतत्त्वानां सर्व्वेषामेव मूलवक्तारः सर्व्वदैव सर्व्वत्रैवाप्ता एव वेदितव्या विविदिषुभिः ।

फेरङ्गादिभाषाभिरपि कालोचितः साधनोपदेशो मयाकारीति तन्त्रे तन्त्रशास्त्रकर्त्तैवोक्तत्वादाप्तावबोधितशक्तिकैरेव वाष्प-विद्युदादिभिस्तदाहरणसन्धारणादिसाधनैश्च वस्तुभिर्महायन्त्रा-दीनि प्रलोभनानि, पयोविकारादिभिर्विविधमोदकानीव, गन्धकादिभिरग्निचित्राणीव च निर्म्मातुं शक्नुवन्ति राष्ट्र-सहानुभूतिप्रसिक्ताः पाश्चात्यवणिजः । पाश्चात्यमनीषिण एव सूक्ष्मसाक्षात्करणपटव इत्येवमुद्भ्रान्तवचनं पुनरनुपपत्तेरेव न श्रद्धेयमपामरैः । सूक्ष्मप्रत्यक्षपटुत्वं हि निर्व्विचारवैशारद्यं विना न सम्भवेत्, तदेतदशुद्ध्यावरणमलापेतस्यैव बुद्धिसत्त्वस्य निष्पद्यते न तु कामोपहतस्य तत्प्रसङ्गोऽस्ति । ज्ञानिनो नित्य-वैरिणा कामेन ज्ञानमावृतमिति च मया प्रागेव सुविवृतम् । अथ पाश्चात्यविपश्चितो जितकामा अपि स्युरिति कुतो न वक्तव्यमिति चेदेवमसम्बरणीयं हास्यमुपस्थाप्यते विपरीतानु-मानेन । ये खलु, नित्यनवीकृत-प्रलोभनीययन्त्रादिविनिमयेन विश्वेषां विवेकसहितानिस्वधनानि निःशेषयितुमेव, मन्वादिभि-रुपपातकमध्ये गणितत्वाद्युगान्तरीयमनीषिभिः कदापि नाचरितं महायन्त्रप्रवर्त्तनमविरतमाचरन्ति, तेऽपि हन्त जितकामाः कथनीयाः ।

अथाभिनन्दनीयापि पाश्चात्यविदुषां विज्ञानोन्नतिः कथमुप-

पातकेषु गणनीया स्यादिति चेदिदमपि विशिष्य पुनरावर्त्तनीयं मे। धुस्तूरवीजसम्मिश्रमोदकवत् सर्व्वमेव मादकद्रव्यं वित्त-विवेकहरमपि तत्सेवकानामापातसुरसत्वादभिनन्दनीयमेव स्यात्। भीषणन्तु तत्परिणामफलं बहुधैव कार्त्तनीयं कथमिह मया समाधेयं स्यात्, तथापि सुप्रसिद्धस्तत्परिणामक्रम एव स्मार्य्यते। धनहार्य्यभोगस्य हि तादृशमादकद्रव्यस्य मादकतैव विवेकोप-हरणात् सुलभावकाशां तदासक्तिं जनयति। एषा पुनरभ्यास-दृढ़ीभूता शान्तिहारं मानवजन्मापीन्द्रियतर्पणैकफलकं विदधाना निःस्वीभवतां परधनेऽप्यभिलाषमाबध्नाति। आभ्यामेवेन्द्रिय-दासीकृतानां चौर्य्यदस्युत्वकापट्यलाम्पट्यादीनि पापवृक्षवीजानि समुद्भिद्य पृथिवीमाच्छादयन्ते। येषामश्रुतपूर्व्वाण्येव नैरन्तर्य्य-विविधत्वबहुत्वानि मादकमङ्गलैषिभिः प्रणीतदण्डानामतिशैथिल्या-दनिवार्य्यतां यान्ति। तेनैवान्तःप्रकुपिता प्रकृतिरनिशमावर्त्तयति वीनुत्पातान् षड़ीतीश्च। षष्ठीं पुनरीतिमुपक्रम्य यानि मादक-कृद्भिरेव सृज्यन्ते स्मर्य्यमाणभीषणानि मारकाणि तेषामस्माभि-रवाच्यतैवास्ताम्। अहो! किमेतावत्यापि कार्य्यपरम्परया महायन्त्रप्रवर्त्तनस्योपपातकता नाभ्युपेतव्या। किमु वक्तव्यं "चित्तनदी नामोभयतो वाहिनी वहति कल्याणाय वहति पापाय चे"ति योगभाष्योक्तायाश्चित्तनद्याः प्रतिद्वन्द्विनी ये द्वे स्रोतसी तयोरेकं विषयस्रोतस्तेनैवोपपातकेन शतशतीकृत-पञ्चसंख्याक-मपि क्रमोन्नतिं नीयते, द्वितीयञ्च विवेकस्रोतः सुतरामेव शास्त्रावरणजनितानास्थादिकृशीकृतालोचनमपि क्रमावनतिं

नीयतेतराम् । स्रोतसोरित्थमुन्नत्यवनती पाषण्डैरभिनन्दिते इ एव, साधुभिस्तु जुगुप्सिते ते एव । यद्यपीदानीं विरलविरला एवैते तथापि प्राच्ये वा पाश्चात्ये वा सर्व्वत्रैव किल तादृशा महामनीषिणस्तिष्ठन्ति च स्थास्यन्ति च नानाजन्माभ्यस्तसत्य-ज्ञानसंस्कारस्य मिथ्याज्ञानसंस्कारराशिभिरप्युच्छे त्तुमशक्यत्वात् । देवज्ञस्य मे किङ्कराण्येवेन्द्रियाणि विषयोपभोगस्तेषामेवाधीन-स्तदधीनश्च यदृच्छाचारः स कथं मम स्यादित्येवमादिकां सत्यबुद्धिमिन्द्रियप्रीतिपरतैव स्वाधीनताविचित्रभोगचातुर्य्यमेव पाण्डित्यं यदृच्छाचार एव सभ्यचरित्रं ममास्तामित्येवमादिका मिथ्याबुद्धिरपहन्तुमलं न स्यात् । इत्थं विपुलान्धपरम्परान्तः-पातित्वेनाप्यनभिभूतस्य विवेकज्ञानस्य निदानं शास्त्रमेवाप्तै-रुपदिष्टं तस्मादपि तेषां ज्ञानस्यालौकिकत्वं सुव्यवस्थित-मेवेत्येतदेतावदेवास्तां द्वितीयन्तु शास्त्रानादित्वं यैर्जिज्ञास्यते तैरेव प्रथमद्वितीयदर्शनयोः शब्दविचारं सम्यगालोच्य तदुप-लब्धव्यमेव । प्रथमदर्शने हि शब्दानां स्थिरत्वमेव व्यवस्थाप्य क्षणिकत्वं सर्व्वथैव निराकृतं द्वितीयदर्शने तु तेषां क्षणिकत्वमेव व्यवस्थाप्य स्थिरत्वं सर्व्वथैव निराकृतमेवञ्चैकदर्शने स्थिरत्ववादात् पूर्व्ववर्त्ती सन्नेव क्षणिकत्ववादो निरस्तस्तथान्यदर्शने क्षणिकत्व-वादात् पूर्व्ववर्त्ती सन्नेव स्थिरत्ववादो निरस्तः । सुतरामनयो-रन्यतरस्य कस्य वादस्य परवर्त्तित्वं ध्रुवमध्यवसातव्यमित्येत-न्मयैव पृच्छ्यन्ते सामान्यतो निखिलाः शास्त्रज्ञा विशेषतश्च प्रत्नतत्त्वोद्धारव्यापारव्यासक्तमतयः । केनापि विदुषा यावदुभय-

सन्दर्भीय सूत्रव्याख्यानसहितं तदेकतरनियतपरवर्त्तित्वसाधकं सदुत्तरं न दास्यति मह्यम्, तावदेतावतैव शास्त्रस्यानादित्व-मवधार्य्य तदेव ब्रह्मलिङ्गमनावरणं विधाय लोकहिताय च संसेव्यतां तथ्याभिनिवेशिभिरिति मे निवेदनम्।

इति महामहाध्यापक-श्रीरामचन्द्रमल्लिक-व्याकरण-काव्य-
सांख्यतीर्थविरचिते दर्शनसमुच्चये उपसंहाराख्यः
पञ्चदशः परिच्छेदः ॥१५॥

समाप्तोऽयं ग्रन्थः।

——०——

## "दर्शनसमुच्चय"-सम्बन्धे पण्डितवर्य्याणां अभिमतानि ।

भारतविख्यात-सर्व्वशास्त्रज्ञ-महाकवि-महामहोपाध्याय-श्रीयुक्तहरिदाससिद्धान्तवागीशमहोदयानामभिमतम् ।

पण्डितमण्डलधुरीणेन श्रीमता रामचन्द्रसांख्यतीर्थेन प्रणीतं "दर्शनसमुच्चयं" नाम ग्रन्थं प्रायेणैव वयं परिदृष्टवन्तः । अत्र हि मधुरा रचनाचातुरी, गभीरा दर्शनगवेषणा, परिपेशलं विचारकौशलम्, प्राचीनग्रन्थकारगणे प्रगाढ़ं भक्तिगौरवम्, दर्शनशास्त्रे च गरीयसी श्रद्धा प्रायेण प्रतिपदमेव प्रतीयते । तद्वयं नितरामेवानन्दिताः स्मः । मन्यामहे च अयं खलु दर्शनसमुच्चयः सुधीसमाजे यशःसमुच्चयमेव लप्स्यत इति ।

दर्शनविद्यालयाध्यापक-दार्शनिकप्रवर-श्रीयुक्तईश्वरचन्द्र-शास्त्रि-पञ्चतीर्थ-महोदयानामभिमतम् ।

दर्शनसमुच्चयाख्यमदः पुस्तकं भिषग्वरेण "गोविन्दसुन्दरी-आयुर्वेदमहाविद्यालया"ध्यक्षेण विदुषा श्रीमता रामचन्द्रमल्लिक-व्याकरण-काव्य-सांख्यतीर्थेन, षड़्दर्शनशास्त्रसलिलनिधिं समा-

लोड्य तदन्तः प्रविश्य च ततस्तत्त्वरत्नानि संगृहीतानि।
स्वमनीषया सम्यग्विचारितानि च। अतिगभीराशयस्य दर्शन-
शास्त्रस्य दुरवगाह्यत्वमपनीयानेन दर्शनसमुच्चयाख्यसन्दर्भेण जानु-
दघ्नत्वं सम्पादितम्। सन्दर्भेऽस्मिन् ये ये विषया सन्निविष्टास्ते
सर्वेऽतीवप्रयोजनीयाः। अस्मिन्नेकस्मिन् पुस्तके निहितसकल-
दर्शनाभिप्रेतपदार्थानां पाठेऽनायासेन ज्ञानं समुपजनिष्यते। अमुना
दर्शनतत्त्वजिज्ञासूनां विद्यार्थिनां विशेषोपकारो भविष्यतीति
मन्ये। क्वापि क्वापि प्रौढ़रीत्या स्वमतप्राधान्यमपि प्रदर्शितम्।
विद्वत्समाजेषु सर्वथा सांख्यतीर्थमहाशयः प्रशंसार्हः। प्रचार-
बाहुल्यमस्य कामये।

नव्यप्रधाननैयायिक-पण्डितप्रवर-श्रीयुक्त-अमरेन्द्रमोहन-
तर्कतीर्थमहोदयानामभिमतम्।

भारतीयदर्शनानामार्षाणां लौकिकालौकिकाशेषतत्त्वगुम्फितानां
ऐहिकामुष्मिकाभ्युदयनिर्व्वाणफलप्रदानां सूत्र-भाष्यवार्त्तिक-
प्रकरण-सन्दर्भाः प्रचुराः सन्ति। तेषु पिपठिषूणां
बालानां सुकुमारमतीनामन्येषाञ्च झटिति प्रतीतौ काठिन्य-
मवबोध्य श्रीमता विद्वत्प्रवरेण रामचन्द्रमल्लिक-काव्य-व्याकरण-
सांख्यतीर्थेन दर्शनसमुच्चयाख्यः सन्दर्भोऽयं महता श्रमेण प्रणीतः।
अस्मिन् ग्रन्थे सांख्य-योग-पाशुपत-चार्व्वाक-मीमांसादि-दर्शन-
शास्त्रोक्तान् सुबहून् जटिलविषयान् अवलम्ब्य विचारपूर्व्वकं

तेषां सुराद्वान्तः कृतः। श्रीमद्वेदभाष्यकृता सायण-माधवाचार्य्येण स्वविरचिते "सर्व्वदर्शनसंग्रहा"ख्ये सन्दर्भे नकुलीश-पाशुपत-शैवदर्शन-प्रत्यभिज्ञादर्शन-रसेश्वरदर्शन-बौद्धदर्शनविषया विचारसंग्रहप्रसङ्गे नातिकठिनरीत्या प्रदर्शिताः। अस्मिन् दर्शन-समुच्चयनाम्नि सन्दर्भे इति सुगमरीत्या आवश्यकीयविषया विचारिताः समालोचितास्तेषु स्वमतमपि प्रकाशितञ्च। अत्र ग्रन्थकृता कविराजमहाशयेन सम्यक् पाण्डित्यं प्रकाश्य विदुषां प्रीत्यास्पदमभूत्। ईदृशः सुबोधतत्त्वपूर्णः सन्दर्भो विरलः सम्प्रतीति मन्ये चानेन दर्शनशास्त्रतत्त्वबुभुत्सुना महोपकारः विशेषतो विद्यार्थिनां दर्शनशास्त्रप्रवेशे सुगमोपायश्च स्यादिति।

कलिकाताविश्वविद्यालयाध्यापक "एम-ए, पि-एच्-डि"
इत्युपाधिक-श्रीयुक्तसातकड़िमुखोपाध्यायमहोदयाना-
मभिमतम्।

कविराजाग्रगण्येन श्रीमता रामचन्द्रमल्लिकेन सांख्यतीर्था-द्युपनाम्ना विरचितस्य दर्शनसमुच्चयनामकग्रन्थस्यादिमो भागः मया सम्यग् अवालोकि। प्रतिपंक्ति प्रतिपदञ्च दार्शनिक-विचारो महता प्रावीण्येन सौष्ठवेन समुद्भावितः। भाषासौष्ठव-मपि प्राचीनाचार्य्यगणशैलीं स्मारयति। अतिशयोक्तिं परिहरताऽपि एतद्वक्तुं शक्यते यद् ईदृशं पाण्डित्यम्, सलीलगामिनी मनीषा,

परिनिष्ठितार्थविषयोन्मेषिका च प्रतिभा अदग्त्वे विरलदर्शना सञ्जाता। इत्थं प्रसन्नगम्भीरदार्शनिकसन्दर्भं विरचयता मल्लिकमहोदयेन नूनं पण्डितसमाजः अधमर्णीकृत इति मदीया प्रतिपत्तिः। आशासे च भगवत्करुणया परमभागवतोऽयं ग्रन्थकारः चिरायुष्टं लब्ध्वा सारस्वतोत्सवं वर्द्धयतादिति।

सुप्रसिद्ध-दार्शनिक-श्रीयुक्तचारुकृष्णतर्कस्मृति-वेदान्ततीर्थ-महोदयानामभिमतम्।

दृष्टः कश्चन नवीनतमः शास्त्रसारसङ्कलनरूपो दर्शनसमुच्चयाभिधोऽयं ग्रन्थः भारतीयपण्डितमहामण्डलस्वागतकारिणी-समितिप्रश्नमालस्बय्यैव रचितोऽयं दर्शनसारः। तत्र सर्व्वेषामेव वेदान्तादिदर्शनानां कानिचन सूत्राणि समुल्लिख्य तात्पर्य्यं संक्षेपेण प्रकटीकृतम्; शाङ्करभाष्यरहस्यञ्च ब्रह्मसूत्रस्य सम्यगावेदितम्। तेन ऐतिहासिकत्वमपि स्वस्य व्यञ्जितं ग्रन्थकृता। विशेषतः तृतीयपरिच्छेदे सूत्रनवकं वैयासिकं समुल्लिख्य निपुणं समालोचितं नवीनया रीत्या। तेन पाण्डित्यमस्य सुगभीरं शक्यते निर्णेतुं पाठकमहोदयैः। महामहिमशालिनः शवराचार्य्यादीनप्याक्षिप्य अतिसाहसमप्याहितं कुत्रचिच्च। मन्ये संक्षेपतो दर्शनतत्त्वबुभुत्सूनामनेन शास्त्रप्रवेशद्वारं लप्स्यते।

ग्रन्थकारश्चायं गोविन्दसुन्दरी-आयुर्व्वेदमहाविद्यालयाध्यक्षः, प्रवीणतमचिकित्सकः, सहृदयः शान्तः सौम्यो विष्णुसेवकः, प्रथितयशाः श्रीलरामचन्द्रमल्लिकमहोदयः ; तस्य आयुर्व्वेदपारावारपारीणस्यापि दुर्गमदर्शनशास्त्रालोचनं नितरामादधाति प्रशंसनीयतां विदुषामिति शम् ।

पण्डितप्रवर-श्रीयुक्तरामेश्वरतर्कसिद्धान्तमहोदयानां
पण्डितप्रवर-श्रीयुक्तनवकान्ततर्कदर्शनतीर्थ-
महोदयानाञ्च संयुक्तमभिमतम् ।

लब्धप्रतिष्ठ-विद्वद्‌गरिष्ठ-दार्शनिकवरिष्ठ-महोपदेशक-कविराजशिरोमणि-श्रीरामचन्द्रमल्लिकेनालोड्य दर्शनशास्त्राणि सारमाकलय्य ततः सुष्ठु विरचितो व्याख्याकृद्विरुद्धवादार्थान्धतमसाच्छन्न-दर्शनशास्त्रप्रदीपायमानो दर्शनसमुच्चयाभिधायको दर्शनग्रन्थस्तिमिरेषु दीप इव सतामपि दार्शनिकवरेण्य-माधवाचार्य्यादिसङ्कलितसर्व्वदर्शनसंग्रहादीनां प्राचीनानां दुरूहतया तद्दर्शनालसचेतसामिदानीन्तनीयानां दर्शनसारार्थबुभुत्सूनां सुकुमारमतिबालानाम् अनायासबोधगम्यत्वेन निरतिशयां प्रीतिमावहन् स्वप्रतिभाप्रभावेण सर्व्वत्र प्रसृतिमालभ्य ध्रुवं दर्शनशास्त्रमर्य्यादां सम्यक् परिपुष्यतितरामिति प्रत्यक्षीकृत्य ग्रन्थमेनं विरुद्धवाद-

वितण्डानिराकरणपूर्व्वक-तदैकमत्यसंस्थापनपरस्य देशहितैषिणो महात्मनः श्रीमतो ग्रन्थकर्त्तुरस्य दीर्घजीवित्वं कामयामहे जगन्नियन्तुरन्तिके चिरादित्यलम् ।

भारतीविद्यालयाध्यापक-पण्डितप्रवर-श्रीयुक्तलक्ष्मीकान्तविद्याभूषणमहोदयानामभिमतम् ।

परिदृष्टो मया कविराजकेशरि-काव्यसांख्य-व्याकरणतीर्थोपाधिक--पण्डितप्रवर--श्रीयुक्तरामचन्द्रमल्लिकमहोदयप्रणीतो दर्शनसमुच्चयो नामको ग्रन्थः। अस्मिन् ग्रन्थे ग्रन्थकृता दर्शनशास्त्रसमूहालोचनायां गभीरपाण्डित्यं प्रकटीकृतम्, रचनामाधुर्य्यञ्च सुष्ठु प्रदर्शितम्। मन्ये खल्वयं दर्शनसमुच्चयः शिक्षार्थिनां शिक्षकाणामपि महोपकाराय भविष्यतीति ।



## A Report of the Bharatiya Pandit Mahamandal.

[ Published in **The Amrita Bazar Patrika** 17. 3. 35. ]

Under the auspices of the Bharatiya Pandit Mahamandal, a general meeting was held on Monday last, at the temporary office of the Mahamandal. Mahamahopadhyaya Sj. Haridas Siddhantavagis presided and Kaviraj Ram Chandra Mullik, Kavya-Vyakarana-Sankhyatirtha read a beautiful synopsis of his book "Darsana Samuchchaya"

Pandits Radhacharan Smrititirtha, Kalinath Vedantasastri, Pramada Charan Kavyatirtha, Hrishikesh Vidhyabhusan and others joined in the discussion. All of them highly praised the scholarship of the Kaviraj Mahashaya.

At the close of the general discussions the president, Sj. Haridas Siddhantavagis discussed the merits of the book from various standpoints, and said that the

Kaviraj Mahashaya was not only a well-known Kaviraj but also an eminent Sanskrit scholar. In spite of his multifarious activities, he could write such a critical treatise on philosophy that was due to his high proficiency and perseverance. He pleaded ignorance to the fact that any other Kaviraj of recent times had written such a treatise on Philosophy.



